(४४) तत् सुभ्रु वक्त्ररलमन्थर मुग्धमन्द
तिस्र त्रिभङ्गि मधुरालस दृष्टिपातम्।
वक्त्रं मनोहर मनुस्मरतः प्रयान्ति
चित्तस्य कान्यपि मनोरथचेष्टितानि॥

---

त्यर्थः। विधेस्तादृशदुरभिलषित्वपक्षे इति भावः। ह इति कुत्सायां सुस्तनया अप्रयोजिकया दुराकाङ्क्षया न हानिरिति भावः। ह स्यात् सम्बोधने पादपूरणे च विनिग्रहे। नियोगे च क्रियायां च कुत्सायामपि दृश्यते इति मेदिनी। तत्र युक्तिमाह। वराकः ईदृक् विधिवैषम्ये न शोचनीय इत्यर्थः। वराकः शङ्करे शोच्ये इति विश्वः। सः राजेन्दुः पर्वेन्दुः वदनपूर्णेन्दुः। इह तच्छब्दस्य वदनपरामर्शित्वेऽपि विधेया-भिप्रायकं पुंस्त्वम्। मदनकोदण्डलतया मन्मथचापेन शाकं कुव-लययुगं मदनबाणद्वयमित्यर्थः। तदुक्तं नीलोत्पलञ्च पञ्चैते पञ्चबाणस्य सायका इति। न वहति किं? न धत्ते किं? वहत्येव किलेत्यर्थः। सुखस्य कमलोत्कर्षप्रतिपादकगुणविशेषशालित्वाभावे खलु हानिरिह पुनरतथात्वाच्चेति भावः। तथा च सुखस्य कमलोत्कृष्टगुणविशेषरूप-साहश्य प्रतिबन्धकशालित्वात् तादृक् इति निजं स्थानं अस्मात्समेवेति भावः। अत्र कोदण्डलता कुवलयशब्दाभ्यां भ्रूविलोचनयोर्लक्षणा-ख्लुलमिति विशेषणस्य साभिप्रायत्वात् परिकरः। सुखविषयक-कमलसादृश्यस्थानस्य अयुक्तत्वसिद्धये आकाङ्क्षी चेन्न वहति किमि-त्यूहोक्त्या सम्भावनमलङ्कारः। कोदण्डलतया कुवलययुगमित्यत्र विषयं निगीर्य विषयिणो रूपेण विषयस्य अध्यवसानात् शुद्धा रूपकाति-शयोक्तिः। एषामलङ्काराणां क्रमेण लक्षणानि। अलङ्कारः परिकरः साभिप्राये विशेषणे। सम्भावनं यदीत्थं स्यादित्यूहोऽन्यस्य सिद्धये। रूप-कातिशयोक्तिःस्यान्निगीर्याध्यवसानतः। इति सम्भावनरूपकातिशयोक्त्योः सङ्करः अनयोः परिकरस्य च संसृष्टिः। इत्यलं विस्तरेण।

(४४) तत् सुभ्रु वक्त्ररलमन्थरमुग्धमन्द इति। तदिति तरलमन्थ-

सर्व्वथा दुर्लभावयव वस्तुने स्पृहयालु मनुशोचामि तपस्विनमात्मानम् ।

तां दुर्लभामपि तपोभि रनल्पतप्ते-
र्जानिं तथाप्यभिलषामि कुरङ्गनेत्राम ।
नीहार भूधर किरीट विलासमालां
भागीरथीमिव जनो मलयाचलस्थः ॥

हसेयुश्च मां अनुत्कण्ठ मानि जने निवद्धाभिलाषं विदग्धा गोष्ठीमध्ये षु ।

---

रसुग्धमन्दतिरस्त्र त्रिभङ्गि मधुराऽलसदृष्टिपातं तरलानि लोलानि धारावाहनन्यायेन सञ्चारशीलानि इत्यर्थः। मन्थराणि मन्दसञ्चाराणि । उक्तञ्च मन्थरा मन्दसञ्चारा इति । मुग्धानि सव्याजभावगर्भस्वभावानि। मन्दानि जडानि व्रीडयेति भावः । अतएव स्वानुकूल्यप्रकाशकानि । उक्तञ्च । स व्याजालोकनेनैव स्वानुकूल्यप्रकाशनमिति । तिरश्चि तिर्य्यगुदञ्चितानि यथा । तिरश्चानिर्य्यगुदञ्चितमिति । त्रिभङ्गीनि प्रतिहष्टि प्रतिघातेन कौतुकभरेण च यथा क्रममासार प्रसाराभ्यां तरङ्गत्रयरीतिभाञ्जि । अतएवैतानि कौतुकानि तरङ्गितानि (तदुक्तं) कौतुकं तत् यदालोक्य भूयो भूयोऽवलोकनं कल्लोल इव यः कान्तिविच्छेदस्तत् तरङ्गित इति। (त्रिभङ्गीत्यत्र प्रसङ्गि इति पाठे) प्रसङ्गीनि सभ्रूविलासखचितवन्ति प्रसङ्ग इग्विकारो यथा। प्रसङ्गं तद्भवेत् सभ्रूविलासं खचितञ्च यदिति । सभ्रूविलासमित्युक्त्या चतुरं नाम भ्रूकर्म सूच्यते चतुरं यथा। चतुरं किञ्चिदुच्छ्वासा मधुरा रचना भ्रुवोः इति। मधुराणि सन्तापहारीणि अलसानि प्रेमणा पुरः प्रसृतानि पश्चात् विभाव्य व्रीडयेव प्रतिनिवृत्तानि । यथा अलसन्तदभीष्टार्थात् व्रीडादैर्य्यन्निवर्त्तते इति दृष्टिपातानि यस्य इति वक्त्रविशेषम् ।

(४५) हास्यः स एव मदनस्य मुधा शरव्यं
आत्मन्यरक्तहृदयामभिकाङ्क्षते यः ।
धन्यस्त्वसौ दहति यस्य कृते मृगाक्ष्यो
गण्डस्थलानि शरकाण्डविपाण्डराणि ॥

साशङ्कम् ।

(४६) यत्तिर्यग् वलितं यदश्रु ललितं यच्चाञ्चले कूणितं
तत् सर्वं किमु दीर्घयोर्नयनयोर्नैसर्गिको विभ्रमः ।
आहोस्विन्मदनुग्रह व्यसनिनो मारस्य लीलायितं
धिङ् मां येन गतत्रपेण किमपि प्रत्याशया कल्प्यते ॥

---

(४५) हास्यः स एव इति । हास्यः इति स एषः हास्यः यः मदनस्य मुधा निष्प्रयोजनतया शरव्यं लक्ष्यभूतः सन् आत्मनि स्वस्मिन् अरक्तहृदयां अनुरागशून्यमनस्कां अभिकाङ्क्षते इच्छतीत्यर्थः । धन्यः कृतार्थस्तु असौ यस्य पुरुषस्य कृते मृगाक्ष्यः शरकाण्डवत् विपाण्डराणि धवलानि गण्डस्थलानि दहति वहन्ति इत्यर्थः । अत्र पूर्वार्द्धे अनुरागिभिः पुरुषैः अननुरक्तः सुभ्रू संगमो न लभ्यते इत्याशयेन मुधा कामिनः पुरुषस्य निष्फलप्रयत्नतया परिहास्यत्वोक्तिः । यथोक्तं केनापि सुः परिभवपदं नि-ष्फलारम्भयत्ना इति । उत्तरार्द्धे तु श्रिया दुरापः कथमीप्सितो भव इति न्यायेन सुदृशा सुलभ्यतत्वे अरक्तस्यापि पुंसस्तत् सुलभत्वात् अतिदुर्घटायुवति जनस्य गाढोत्कण्ठा यदर्थमङ्कुरति स एव पुमान् दुर्घटघटनश्लाघनीयतया कृतार्थ इति भावः ।

(४६) यत्तिर्यग्वलितमिति । तिर्यक् वलितं दर्शनोत्कण्ठया तिर्यगुदञ्चितमिति यत् । वलितं यथा । वलितं तद्वियुक्तस्य भूयस्त्वावलोकनं तिर्यक्तिर्यगुदञ्चितमिति च । ललितं अश्रु इति यत् । अञ्चले अग्रभागे अपाङ्गे इति यावत् कूणितं सङ्कुचितमिति यत् सङ्कुचितदृग्विकारो यथा । अपाङ्गभाग सङ्कोचो यत्र तत्कुञ्चितं भवे-

अथवा

(४७)अविभ्रमदभ्रमुवल्लभगमनाया ऐन्द्रियाणि ।

यान्यपराङ्गिकान्यलोकिषत ते ते विकाराः सात्त्विकाः ॥

तथाहि ।

(४८)पञ्चसायकमहेन्द्रजालिना पाणिपद्मसमुदञ्चिता स्वयम् ।

वर्द्धनाय मनसः प्रगल्भते पिञ्छिकेव मम चञ्चलेक्षणा ॥

---

दिति । ततश्च दीर्घयोः नयनयोः नैसर्गिकः स्वाभाविकः विभ्रमो विलासः किन्तु सुगममन्यत् ।

(४७)अथवा अविभ्रमदिति । अविभ्रमदभ्रमुवल्लभस्य अत्वरदैरावतस्य गमनमिव गमनं यस्या इति विग्रहः । ऐन्द्रियाणि मनोनेत्रादिजन्यानि आङ्गिकानि अधर भ्रू स्तनादि जन्यान्यपि यानि इति सामान्ये नपुंसकं कर्म अलोकिषतः दृष्टानि मयेति शेषः । तेन इति विधेयाभिप्रायकं पुंस्त्वम् । सात्त्विकाः परागत सुखदुःखादिभावनात्यन्तानुकूलान्तःकरणत्वं सत्वं तेन निर्वृत्ता विकाराः सात्त्विकाः । यथोक्तं दशरूपे । पृथग्भावा भवन्त्यन्येऽनुभावत्वेऽपि सात्त्विकाः । सत्वादेव समुत्पत्तेस्तच्च तद्भाव भावनम् । स्तम्भप्रलयरोमाञ्चाः स्वेदो वैवर्ण्यं वेपथू । अश्रुवैस्वर्यमित्यष्टाविति । ननु । सत्वादेव समुत्पत्तेरित्युक्तया ऐन्द्रियाणां विकाराणां आङ्गिकत्वं कथमिति न शङ्क्यम् । स्वेद वैवर्ण्य वेपथ्वादीनां ऐन्द्रियत्वेऽप्याङ्गिकत्वात् यद्वा जीववत् शरीरं सत्वं तस्य धर्माः सात्त्विका इति ।

(४८)पञ्चसायकेति । चञ्चलेक्षणा पञ्चसायको मदन एव महेन्द्रजाली इन्द्रजालप्रयोक्ता तेन स्वयं पाणि पद्मसमुदञ्चिता करसरसिजोत्क्षिप्ता पिञ्छिकेव मयूरबर्ह इव मम मनसः वर्द्धनाय चेतसः प्रक्षोभनायेत्यर्थः । प्रगल्भते । प्रभवतीत्यर्थः । इह पिञ्छिकेवेत्युपमा । अस्याश्चैन्द्रजालिककरे क्षिप्यमाणायाः प्रेक्षकजनमनः प्रक्षोभकत्वं मन्त्रशास्त्रे प्रसिद्धम् । यथोक्तं मन्त्रखण्डे इन्द्रजालेषु श्रीनित्यनाथ पादैः

तस्मिन् समये (४८)

स्विन्नौ गण्डौ स्फुरितमधरं स्पन्दितं चूचुकाग्रं
सन्नौ बाहू मसृण मुकुले लोचने भ्रूलतेव ।
अङ्गादङ्गादजनि पुलकश्रेणि रूरू सकम्पौ
किञ्च श्वासान्तरलित दुकूलाञ्चलाञ्चलाख्याः ॥

इत्थं तामेव तरलेक्षणा मनुधावतो हृदयस्यास्य निक्षेपता उपालभे तावत् ।

सन्धानो विनयो गुरुर्न गणितो धूताकरं गृह्णतो
व्रीड़ा केलि सखी कथञ्च नमतो नेच्छन् विवेकः सुहृत् ।
बाल्यादेव निरन्तरं परिचितो नाहं प्रमाणीकृतः
सा कानेव परीक्षिता शशिमुखी हा चित्तकस्ते भ्रमः ॥

आश्चर्य्य मपरावस्था मन्मथस्य प्रसादकोपयोः ।

---

सामुद्र तोयमादाय महाभाण्डे विनिक्षिपेत् । खनेत् तद्भूमिमध्ये तु मासमेकं सुरक्षितं तदुद्धृत्य विधानेन कज्जलेन तु पेषयेत् । अङ्कोल-स्नेहमिश्रन्तु उच्छूलिक रजोयुतम् । कृत्वा तु गुलिकां दिव्यां निक्षिपेत्तां नवे जले । वह्निं पिञ्छेन संस्पृश्योज्ज्वालयेत्तु महाऽनिले । महाध्वनि समायुक्तो वडवानलसंयुतः । दृश्यते भुवनं व्याप्य महावारि निधिस्तथा दिति ।

(४८)ते ते विकाराः सात्विका इत्युक्तं प्राक् अत्र तेषां प्रादुर्भाव प्रकारमाह तस्मिन् इति । तस्मिन् समये मदवलोकनकाले इत्यर्थः ।

स्विन्नौ स्वेदयुक्तौ बाहू सन्नौ स्तब्धौ लोचने मसृणं रागपेशलं यथा तथा मुकुले तुल्यपारवश्यादुन्मीलिततारके उक्ताञ्च मसृणं तत्तु विद्धे-यमनुराग कषायितमिति । स्फुरित श्लिष्टपक्ष्माग्रा मुकुलोर्द्धपुटोच्छृता समोन्मीलिततारा च मुकुला दृष्टिरिष्यते इति च । इह मुकुलत्वविशि-ष्टस्य स्फुरित श्लिष्टपक्ष्माग्रत्व लक्षणोपलक्षितत्वात् इष्टप्राप्तिं द्योत-

परागैः कार्पूरैस्तुहिन सलिलैश्चान्दनरसैः
सुधाभिर्ज्योत्स्नाभिः स्नपितमिव यः प्रागकृत माम्।
स एवासौ मारः शिवशिव वियोगे मृगदृशः
करालं काकोलं किरति मयि कालानलमपि॥ (५०)

आकाशे लक्ष्यं बद्धा।

बाणाग्नि मस्तकरुणो विकिरन् ममाङ्गे
प्रायो न वेत्सि विषमास्त्र वरस्य पीड़ाम्।
सन्ताप एष भवता किमु नान्वभावि
चोलक्षपतेरलिकलोचनगोचरेण॥ (५१)

कस्मै पुनरिदं निवेदयामि। प्रियमित्रं कलकण्ठो नगरदर्शन कुतूहली गतो नाद्यापि निवर्त्तते। इति सन्ताप मुकुलित लोचनस्तिष्ठति।

---

स्फुरमिति निमित्त निदानोक्तानुसारेण इष्टप्राप्तिर्भविष्यतीति सूच्यते। एका भ्रूः चला चञ्चला इत्यर्थः। अनेन शुभं भविष्यतीति सूच्यते। यथोक्तम्। निमित्तनिदाने मूर्ध्नि स्पन्दात्क्षितलाभं फाले पट्टं शुभं भ्रुवि इष्टप्राप्तिं दृशोर्दृष्टं अपाङ्गे हानिमादिशेदिति। जङ्घ स्फुरणो अनेन हितोपाङ्कुवर्त्तित भविष्यदम्बर प्राप्तिः सूच्यते। उक्तञ्च। जरोः स्पन्दात् रतिं विन्द्यात् जङ्घोः स्पन्दात् सुवाससः।

(५०)परागैः कार्पूरैरिति पद्ये। काकोलं विष विशेषम्।

(५१)बाणाग्निमस्तकरुणा इति पद्ये। हे विषमास्त्र वर! इति कामस्य सम्बुद्धिः। ममाङ्गे बाणाग्निं अस्तकरुणः निर्दयः विकिरन् वर्त्तन् त्वमिति शेषः। स्वपीड़ां प्रागनुभूतां बाधामित्यर्थः। प्रायः प्रायेण न वेत्सि न स्मरसि इत्यर्थः। मदङ्गे निर्दयतया बाणाग्नि वर्षादेव ज्ञायते स्मृतिमत्त्वे तु नैतदनुतिष्ठेरिति भावः। लोके हि स्वय-मनुभूत बाधाः परान्न बाधन्ते इति प्रसिद्धिः। ननु कथं मम प्रागनुभूत-

ततः प्रविशति कलकण्ठः।

कलकण्ठः। सानन्दं परिक्रम्य। अद्य खलु कुसुमपुरं गतेन अमात्य विष्णुरात भवन रथ्यां प्रविष्टेन मया निर्विष्टं चक्षुष्मत्तायाः फलम्। तथाहि

(५२) सौधे क्वापि महेन्द्रनीलघटिते सौदामिनी वाम्बुदे
क्रीडन्ती सवयोभि रिन्दुवदना दिष्ट्या मयाध्यक्ष्यत।
सा लीलावलित भ्रुसंहितवती ताटङ्क रत्नाञ्चलाम्
कालिन्दी लहरी चलत् कुवलयस्निग्धान् कटाक्षान् मयि॥

परिक्रम्य। इयन्तं समयं प्रति गत एव तेन मया न दृष्टो जगदानन्द माकन्द कन्दल मलय मारुतो प्रियसखो मारुतः। अतश्चिर मुपोषिते इव लोचने तद्दर्शनामृत पारणाय स्पृहयतः कथितञ्च प्रतिहार्य्या चन्दनलतया। अद्य आश्रमात् प्रतिनिवृत्तः कुमारः। निवारित परिजनः किमपि किमपि मन्त्रयमाणः पटमण्डपमेकएवाध्यास्त इति। यावदहं अभ्यनन्तरो भवामि। इदं पटमण्डपद्वारम्। प्रवेशं नाटयित्वा विलोक्य। सविषादं स्वगतम्। कथमसौ चिन्तातिभार निष्कम्पतनुः स्तम्भित इव चित्रित इव द्राघिष्ठनिश्वास-दण्ड तरलित हार प्रकाण्डकण्टकितकम्र कलेवर विड़-

---

वाधत्वं इत्यतः ए निदर्शनमाह। सन्ताप इति मयानुभूयमानः चन्द्रिका-सन्तापः चण्डीपतेः ललाटस्य अलिकलोचनगोचरेण फालगत नेत्रविषयेण भवता नान्वभावि किन्तु ? अनन्तु भूतं किं अनुभूतमेवछ्रोति भावः।

(५२)सौधे क्वापि इति पद्ये। अध्यक्ष्यत दृष्टा इत्यर्थः। अक्षूव्याप्तौर्यति धातोरात्मनेपदात् कर्म्मणि लङ्।

ल्वित कदम्ब यष्टिः अन्तर्गत गाढ़कर्कश सन्ताप विसंष्टुलावस्थ इव लक्ष्यते प्रियवयस्यः। निर्वर्ण्य।

आश्चर्यमेतदमितं यच्च द्विहताप
मूर्च्छाल दृष्टिरति कष्ट दशां गतोऽपि।
सञ्जायते नयनयोरतिलोभनीयः
घर्म्मावलीढ़ इव चन्दनपादपोऽयम् ॥

विभाव्य। सत्यमयमिदं प्रथमसम्पात दुःसहा मारुतः पराक्कोटिं मदनावेशस्य। कथमन्यथाकारः एवम्विध हृदयज्वरेण शुष्यतोऽस्य निदाघ क्रशस्येव भागीरथी प्रवाहस्य अभिमतः शोभातिशयः। इदन्तु संवदते यदाश्रमगतस्य स्मरविकार इति। भवतु ज्ञास्यामीति समीपमुपसर्पति।

मारुतः। अनुन्मीलित चक्षुरेव। सखे! कलकण्ठ! इत्युक्ते व्रात कलकण्ठः।

कलकण्ठः। स्वगतं। अहो स्नेह वैलक्ष्यम्। यदस्यामप्यवस्थायां मामेव स्मरति। प्रकाशम्। वयस्य! किमिदमकाण्ड एव ते कातर्य्यम्। क्व ते धिक्कृत धराधर धैर्य्यम्।

किं प्राभातिक चन्द्रकान्ति वदनं कस्योदरे शायितं
पक्ष्माणि स्थगयन्ति किं नयनयोर्वाष्पाम्भसां शीकराः।
किं माला मतिलङ्घते च भवतः श्वासः प्रतप्ताधरः
सत्यं शंस वयस्य! किम्पुनरिदं कान्तं वपुस्ताम्यति ॥

मारुतः। कस्य पुनः कथयामि। श्रूयताम्। (५२) अद्य खलु अगलित कौसुम्भ राग एव गगनाशोक स्तवके

---

(५२)अद्य खल्विति। गगनाशोकस्तवके दिवस लक्ष्मीचरणालक्त

दिवस लक्ष्मीचरण यावकपिण्डे मार्त्तण्डे निर्गच्छति अपरिमित परिजन श्रुतचरयोग प्रभावां नाति दुरवर्त्तिनीं मन्दाकिनीं दिदृक्षुः अचकित चमूरु चरितोपकण्ठं तदाश्रम मविशम् ।

तत्र पावन गम्भीर प्रसन्न मधुराकृतिम् ।
तामद्राक्षं हिमगिरेः प्राप्तां मन्दाकिनीमिव ॥ *

कल । ततस्ततः ।

माधवः । (५४) ततश्च, कृतप्रणामं मां सकलिमा-साधारण वात्सल्य पिशुनैः अविरलोत्पतदानन्द वाष्पनिष्पीड़ित पक्ष्म पुटैरालोकैरनुगृह्णती स्वागतार्घ्यादिभिः सम-भवीभवत् ।

कल । ततस्ततः ।

---

पिण्डे मार्त्तण्डे आदित्ये अगलितः कौसुम्भरागो यस्मात् तथा भूते निर्गच्छत्येव सति । इत्यादिना योज्यं अचकित चमूरूणां चरितं उप-कण्ठे समीपे यस्य इत्याश्रम विशेषणं अथवा अचकितं चमूरुचरितं यस्मिन् तथाभूतः उपकण्ठः यस्य इति वा विग्रहः ।

* तत्र आश्रमे पावना दर्शनमात्रेण पुनाना गम्भीरा महत्वविशिष्टा प्रसन्ना कामक्रोधादिकालुष्यरहिता । पक्षे प्रसन्ना शुभ्रा अकलुषेति यावत् । मधुरा पुनःपुनर्दर्शनेच्छाजनका पक्षे जलरूपत्वात् रुच्या पुनः पुनः दर्शनेच्छाजनका इति वा आकृतिः यस्यास्तां तथोक्तां हिमगिरेः प्राप्तां तां मन्दाकिनीं इत्याख्यां धर्मिणीं कर्म मन्दाकिनीं गङ्गामिव इत्युपमा अद्राक्षं अपश्यम् इत्यर्थः ।

(५४) ततश्च कृतप्रणाममिति आलोकैः विलोकितैः कृतप्रणामं मां अनु-गृह्णती सती स्वागतार्घ्याादिभिः समं अभोभवत् स्वागताद्यादियुक्ता भव-तिस्म । भूधातोः लुङिः अट् णिच् चङ् णिलोपः द्वित्वं सन्वद्भावः ।

मारुतः। ततश्च।

तस्मिन् क्षणे कमपि मान्मथ कार्मुकज्या
क्रेङ्कारतारमभिनन्दनमिन्द्रियाणाम्।
काञ्चीकलाप कुलभं करणानुकीर्णं
माकर्णय झणझणं मणिनूपुराणाम्॥

(५५) ततश्च कात्यायनी परिवसरवर्त्ति भवनाराम वीथ्यां जङ्गममिव लता वृन्दं अग्रतः सरसीविद्रुमकरतलो-ल्लसितताम्रनालकाण्ड दर्शिता काण्ड तडिल्लता ताण्डवि-ताम्रमणिखण्डमण्डलं उद्दण्ड माणदण्ड चामरान्दोलन चतुरवारसुन्दरी करतल चलित मणिवलयझणझणिताकृष्ट परिसर सरः सारसम्। उत्तम्भित विद्रुमदण्डमण्डित धव-लात पत्रविमलविधु मण्डलतरलित जीवजीवकं आभरण-प्रभाघटित शतमखशरासन शतदन्तुरितान्तरिक्षं अत्यु-दारवेष मण्डलं अबला कदम्बकमालोकयम्।

काल। ततस्ततः।

मारुतः। ततश्च।

(५६) अर्कच्छायन्तिरयति सुधालिप्त विद्युन् मतल्ली
चक्रप्रख्यं महति सुषुमामण्डले दूरमस्तम्।

---

अभ्यासोऽकारस्येत्वं तस्य दीर्घः। आम्रेडितो कारस्य गुणायादेशौ तिङन्तलोपश्च स्वागतसुदीर्घ्यं अर्घ्य पाद्याचमनीयानि प्रायच्छदिति भावः।

(५५)कात्यायनीति। उत्तम्भित विद्रुमदण्डमण्डित धवलातपत्रमेव विमल विधुमण्डलं तेन तरलिताः जीवं जीवकाः चकोराः येन इति अबला कदम्बकविशेषणम्।

(५६)अर्कच्छायमिति अर्कस्य रवेः छाया कान्तिः अर्कच्छायं विभाषा

रत्नादर्शे प्रतिफलमिव श्रीमदङ्गं वहन्ती
दृष्टा काचित् तरलनयना देवतेव स्मरस्य ॥

अथ सा चतुरमुखी दत्तकरावलम्बं नितम्बभर मन्थरचंक्रमभ्रम वलितचरणारविन्द कान्ति किसलयित मही-तलं उद्गुञ्जित मणि मञ्जीर मञ्जु पठित पञ्चशरचाटु प्रपञ्चं वेपमानावलग्न भङ्ग भय क्रन्दित काञ्ची विलुण्ठनत-रङ्गितदूकूलं ईषत् उत्कम्पितस्तनकुम्भस्खलदुत्तरीयं उदार-

---

सेनासुराच्छायेति नपुंसकम्। छायात्वनातपे कान्तावित्यभिधानम्। तत्कर्म तिरयति प्रच्छादयति। खद्योतकान्ते चन्द्रातप इव निष्प्रकाश-त्वदायिनि इति भावः। सुवर्णत्वादर्कच्छायमित्युक्तिः। महति सुषमा मण्डले परमशोभा चक्रवाले दूरे मग्नं अवगाढं महत्त्वात् परम-शोभा चक्रवालस्य तदन्तरालैकदेशविवक्षया दूरपदप्रयोगः। सुधाभिः अमृतैः लिप्ताः याः विद्युन्मतल्लयः प्रशस्ततडिल्लताः मतल्लिकाः मच-र्चिका प्रकाण्डमुद्धतल्लजौ प्रशस्तवाचकान्यमूनीत्यमरः। तासां चक्रेण समूहेन परव्यं सदृशम्। अत्र मतल्ली चक्रशब्दौ कान्त्यतिशय बाहु-ल्यप्रकाशार्थौ। विद्युद्ग्रहणं परमशोभामण्डलैकदेश मग्नस्य वपुषः अनवद्यास्फुरण द्योतनार्थम्। कान्त्यतिशयशालित्वेन दृष्ट्युप-हार पाटवद्योतनार्थञ्च। विद्युतां दृष्ट्युपहारकत्वेन भयप्रदत्वात् उप-मेयस्यापि तथात्वापत्त्या तद्दोषराहित्येन उपमेये स्वकान्तिवशात् दृष्ट्यु-पहारकत्वेऽपि निभृतावलोकनानन्दजनकत्वरूपविशेष सत्ता प्रदर्शनाय उपमेयगत तादृशविशेषराहित्येन अनुपमानभूतानां विद्युतां उपमा-नत्वसिद्धये च सुधालिप्तत्वविशेषणं रत्नादर्शे प्रतिफलमिव अच्छदर्पणे दृष्टि प्रतिबिम्बमिवेत्युपमा। रत्नादर्शे प्रतिफलमिवेति पाठे कुरुविन्दमणि दर्पणगत प्रतिबिम्बमिवेत्यर्थः। श्रीमत् शोभाशालि कुरुविन्दवच्छाय-मिति भावः। अङ्गं शरीरं वहन्ती धारयन्ती स्मरस्य देवतेव उपास्य दैवतमिव स्थिता। स्वदर्शनमात्रेण त्रिभुवनस्यापि कामवशीभावकारि-

वदन सौरभ लुभ्यदलिगण सम्भ्रमचकित लोचन मरीचि वीचि मेचकित गगनाङ्गनं उल्लसित कुन्तलशिखा चुम्बित कुङ्कुमललामलाञ्छित ललाटतटं अव्याज विविधलास भङ्गीतरङ्गित जनविस्मयं अस्मदभिमुख मुदचलत्।

कल। ततस्ततः।

मारुत। ततश्च। तदुपगमदर्शनकुतूहलात् ससम्भ्रम मुत्थाय मन्दाकिनी प्रथम प्रधावित मानसेन सह मया कियन्त्यपि पदानि गत्वा उटजाङ्गन भाजो लवली लतालिङ्गि तस्य बालतमालतरोस्तलमध्यतिष्ठत्। ततश्च। (५७)

दूरादेव करावलम्बित सखी भ्रू संज्ञया दर्शिते।
मय्युद्दामविलास विस्मयवतीं व्यापरयन्ती दृशम्।
सा मध्ये स्तिमिताप्यसेव किमपि प्राप्ता कुरङ्गेक्षणा।
मन्दं मन्द ममन्द विभ्रमवती मन्दाकिनी सन्निधिम्॥

---

स्येनेति भावः। काचित् तरलनयना दृष्टा अवलोकिता। तथा चास्या उपासना बलादेव कामः त्रिभुवनविजयीति भावः। अत्र त्रिभुवनविजयित्वरूप कामितार्थप्रदत्वेन गम्यमानेन धर्मेण निमित्तेन विषयस्य तरलनयनायाः आरोपास्य देवतातादात्म्यसम्भावनादुक्तविषया स्वरूपोत्प्रेक्षा। लक्षणमुक्तं प्राक्।

(५७)दूरादेवेति। दूरादेव असमीप एव करावलम्बित सख्या भ्रूसंज्ञया दर्शिते सूचिते मयि उद्दामविलासः विस्मयः अद्भुतरसस्थायी च अस्यामिति मतुप्। तां दृशं व्यापारयन्ती प्रेरयन्ती सा कुरङ्गेक्षणा पूर्वोक्तनायिका मध्ये मध्यप्रदेशे स्तिमिता आश्चर्य पारवश्येन स्तम्भापि स्तम्भाख्यसात्त्विक शालिन्यपीति भावः। किमप्यति प्रयासेन असेव चस्तिमितेव इत्युत्प्रेक्षा। अमन्दविभ्रमवती सती मन्दं मन्दं अतिमन्दमित्यर्थः। वीप्सायां द्विरुक्तिः। मन्दाकिनी सन्निधिं प्राप्ता इति योजना।

कल। स्वगतम्। प्रङ्के तस्या अपि चुम्बितमिव हृदय मनङ्ग विकारेण।

मारुतः। यथायथा सविधमगान् मृगीदृशा
तथातथा निविड़तमै स्तदंशुभिः।
सुधारसैरिव परि पूरितेक्षणः
क्षणं ततः प्रभुरभव न वीक्षितुम्।

कल। अहो मनुजाङ्गनादुर्लभोऽयमहः सम्भारः।

मारुतः। ततश्च
प्रत्यङ्गमक्षिनिपुणं विनिवेश्य यत्नात्
पश्यन् विलासतरु नूतनमञ्जरीन्ताम्।
सन्धाय मोहनशरं धनुषीषैरयेव
सन्ताड़ितोऽस्मि हृदये मकरध्वजेन॥

कलः। सखे! किमत्राश्चर्य्यम्।

(५८) वक्षस्थली वदनवामशरीरभागैः
पुष्यन्ति यस्य विभुतां पुरुषास्त्रयोऽपि।
सोऽयं जगत् त्रितयजित्वरचापधारो
मारः परान् प्रहरतीति न विस्मयाय॥

मारुतः। ततश्च।

---

सृष्टिस्थिति संहारकर्तृणां ब्रह्मविष्णुमहेश्वराणामपि आज्ञानुवर्त्तितां प्रापितवतः श्रीमदनस्य पामराणां इतरेषां बाधनं अद्भुतं नेत्याह।
(५८)वक्षस्थलीति। वक्षस्थली वदनवाम शरीरभागैः त्रयोऽपि पुरुषाः यस्य विभुतां पुष्णन्ति वक्षसि विष्णुर्वाचि ब्रह्मा वाम शरीरे महेश्वरस्य स्वस्त्रियं वहन्तो मन्निवेऽति भावः। शेषं स्पष्टम्।

(५६) सूनैर्नन्दन देवताश्रित सखे कद्गुम्फिता मालिका
काप्यस्या स्तनमण्डलप्रणयिनी भाग्योत्तरा लक्षिता ।
रिक्तीकृत्य तदा श्रमद्रुमलतापुष्पाणि पुष्पन्धयाः
यद्वाम्भोरुहि यत्र च भ्रमभृतो दोलायितं नात्यजन् ॥

कल । (६०) इदमपि तस्याः स्फोरयति अनितरसाधारणं साभिजात्यम् । ततस्ततः ।

मारुतः । ततश्च सा

(६१) तत्र क्षणे स्तनतटच्युतमुत्तरीयं
मुग्धेन पाणिकमलेन निवारयन्ती
आमुञ्चति स्म मयि मन्दसमीर धूत
नीलारविन्द तुलितान् तरलानपाङ्गान् ॥

---

(५६)सूनैरिति । नन्दनदेवताश्रित सखे: सूनैः उद्गुम्फिता कस्याः प्रकृतनायिकायाः स्तनमण्डलप्रणयिनी अतएव भाग्योत्तरा कापि मल्लिका लक्षिता दृष्टा पुष्पन्धयाः मधुलिहः तदाश्रम द्रुमलता पुष्पाणि तस्याः मन्दाकिन्याः आश्रमे वर्त्तमानानि यानि द्रुमलता पुष्पाणि तानि रिक्तीकृत्य स्वेषामभावतः शून्यतया विधायेत्यर्थः । यद्वाम्भो रुहि प्रकृतनायिकायाः मुखाम्बुजे यत्र मालिकायां च भ्रमभृतः औभयत्रिकसौगन्ध्यातिशयेन उभयत्र मोहवन्तः सन्तः दोलायितं पुनःपुनरन्यतरस्मादन्यतरगमनं यातायातमिति यावत् । नात्यजन् न त्यक्तवन्तः । सा मल्लिका लक्षितेति पूर्वेण सम्बन्धः ।

(६०)इदमपीति । साभिजात्यं कुलीनताम् ।

(६१)अथ तात्कालिकीं अनुरक्त युवतिजनसाधारणेऽन प्रत्ययार्हां स्वावस्थां अनुरागपूरितान्तरतया पार्वणपीयूषकिरणच्छटा पातोत्पूरवारिधि तरङ्ग सङ्क्षोभलनन्यायेन बहिःस्फुरितां शृङ्गारचेष्टामाह । सा तत्र क्षणे इति । अपाङ्गान् कटाक्षान् इत्यर्थः । कटाक्षलक्ष-

ततश्च तस्याः

(६२)वेलालङ्घि विलासयो विकसतो र्व्याजिह्मयो मन्दयोः
स्मेराकेकरतारयोस्तरलयोः साकूतयोः सास्रुणोः ।

---

यत्तु सङ्गीतरत्नाकरे यद्गतागत विश्रान्ति वैचित्र्येण विवर्त्तनं तारकायाः कलाभिज्ञाः कटाक्षं तं प्रचक्षते इति । शेषं स्पष्टम् । इह स्तनतटच्युत मुत्तरीयमित्यादिना तान्त्रिकातु भविकाङ्गव्यक्तीभावादि चेष्टा प्रादुर्भावोक्त्या नायिकाया कानुरक्त्यं संसूच्यते । यदाह कल्याणमल्लः । व्यनक्ति गात्रं कुरुते च लज्जां दृष्ट्वा कटाक्षं नयने विदध्यात् इत्यारभ्य इत्यादिचिह्नैरनुरागयुक्तां ज्ञात्वा विदग्धां स्मरगाथाचीर्मिति ।

(६२)अतएव तत्र मदालम्बनाः शृङ्गारदृष्टिविशेषाः । बहुप्रकाराः प्रादुरासन्नित्याह । ततश्च तस्याः वेलालङ्घीति । ततश्च उक्तरीत्या कटाक्षपातनानन्तरमपि । सः शृङ्गारचेष्टालम्बनभूतः अहं तस्याः प्रकृतनायिकायाः द्राघीयसोः आयतयोर्नेत्रयोः शृङ्गारदृष्टिविशेषाणां इति यावत् । भाजनतां पात्रत्वं चिरतरं अतिचिरं अगां अभजम् । उक्तञ्च । प्रसादकलिता कान्ता शालिनी मन्मथाश्रया विचलद्भ्रूकटाक्षा च शृङ्गारे दृष्टिरिष्यते इति । तान् विशिनष्टि । वेलालङ्घीति । नेत्रयोः कथं भूतयोः वेलालङ्घिविलासयोः वेलालङ्घिनः अतिवेलाः विलासाः दयितावलोकन कालिक विशेषाः ययोस्तयोः । विलासो यथा । तात्कालिको विशेषस्तु विलासोऽङ्गक्रियादिषु इति । ततः विकसतोः विषय विशेषग्राहिणोः । विकासो यथा । विकासं तत्तु विषये विशेषमवगाहते इति । ततः व्याजिह्मयोः वक्रयोः अरालं वृजिनं जिह्ममित्यमरः । ततः मन्दयोः विषयान्तरागमनागतयोः अनेन मन्थर दृष्टिरुक्ता । यथा । मन्थरा मन्दसञ्चारे इति । ततः स्मेरा केकरतारयोः स्मेरे विषयमात्र विश्रान्तिविरहिणि स्फुरद्भ्रू पक्ष्मणि विशृङ्खल हर्त्तत्व मदमन्थर मीलितत्वादि गुणशीले च । आकेकरे पुनरुन्मेष जिह्मे आत्मव्यापारगुर्व्यौ च । यद्वा आसमन्तात् केशिरः समीपे सञ्चारं कुरुतः इति आकेकरे चक्रा-

सम्भूताकूतयोः सवाष्पलवयोः संमुग्धयोः स्निग्धयोः
सोऽहं भाजनतामगां चिरतरं द्राघीयसोर्नेत्रयोः ।

कलः । मद्यमनिमित्तोविकारो भायमः ।

---

ऽन्या भ्रमभाजो इत्यर्थः । तारे कनीनिके ययोरिति विग्रहः । उक्तञ्च भावप्रकाशे । अपरिच्छिन्नविषयं मदमन्थरमीलितं स्फुरद्भ्रूपक्ष्म तारं यत् तत् तारमिति कथ्यते इति । ततः तरलयोः चञ्चलयोः प्रियदृष्टिप्रतिघातेन कौतुकसम्भरेण च यथा क्रममाचार प्रचाराभ्यां अङ्कोलिततरङ्गभङ्गिकयोरित्यर्थः । अतएव ते कौतुकास्तरङ्गिताश्च । तदुक्तम् । कौतुकं तद्यदालोक्य भूयो भूयोऽवलोकनं कल्लोल इव यः कान्तिविच्छेदस्तत् तरङ्गितमिति च । अथवा । तरलयोः धारावाहनन्यायेन सञ्चारशीलयोः उक्तञ्च । धारावाहिकसञ्चारो यस्य तल्लोलमुच्यते इति । ततः साकूत साभिप्राययोः आकूतं स्यादभिप्राय इति हलायुधः । ततः साश्रुणोः आनन्दसलिलपूरितयोः ततः सम्भूताकूतयोः चतुरास्य भ्रूकर्मसहितयोरित्यर्थः । उक्तञ्च । चतुरं किञ्चिदुच्छ्वासा मधुरा रचना भ्रुवोरिति । अनेन प्रसङ्गाख्यो दृग्विकार उक्तः । यथा प्रसङ्गं तद्भवेत् भ्रूविलासं सचितं च यदिति । ततः अतएव सवाष्पलवयोः अश्रुविच्छेदशालिनोः इत्यर्थः । सदेशीयम्भूताकूतवशात् छिन्नवाष्पयोरिति भावः । लवो रामसुते लेशे विनाशे च्छेदने च ना इति नानार्थरत्नमाला । ततः संमुग्धयोः सव्याजभावगर्भस्वभावयोः । यथा स्वभावावलोकितं मुग्धं भावगर्भमपि स्मृतादिति । ततः स्निग्धयोः स्नेहयुक्तयोः स्नेहपर्य्यायरतिभावानुविद्धयोरित्यर्थः ।

स्नेहो यथा । विस्रम्भे परमां काष्ठां आरूढे दर्शनादिभिः । येमान्तरङ्गं द्रवति सस्नेह इति कथ्यते इति । इह पुनरिमे शृङ्गारदृष्टिविशेषाः सङ्गीतकशास्त्रीय विनियोगोदाहरण तत् संवादित्वादि प्रदर्शने ग्रन्थविस्तरभिया संक्षेपतो व्याख्याताः ; किन्त्वमी मलत्यवस्यादिभेदेन भिन्ना स्वस्थानभवमान वेद्यत्वेन सर्वसंवादहीना अनन्ताश्च । तदुक्तम् ।

माध। (६३)मुग्धाक्ष्या निरुपधि विभ्रमैः कटाक्षैः
प्रत्यङ्गं प्रति फलितैर्निचोलितेन ।
तत्काले मम वपुषा सहस्रनेत्री
सङ्कीर्णा शतमखमूर्त्तिरन्वकारि ॥

कल। तदिदं तरङ्गितायां दृष्टं विलसितम् ।

माध। सखे! ततःप्रभृति (६४) सञ्जातविचिकित्सस्तिष्ठामि तावत् । शृणु

(६५) इदन्तावद्युक्तं द्रुतहिमकरस्यन्दशिशिरे

---

हत्युक्तदृष्टयो लोके हष्टिमागमुपागताः । षट्त्रिंशत् किन्त्वनन्ताः स्युः ताराभ्रूपुट कर्मणा । सन्दर्भादुक्तमप्याप्येताः प्रत्येकं वक्तुमक्षमा इति ।

(६३) मुग्धाक्ष्या इति । मम इत्यनुषङ्गः । प्रत्यङ्गं प्रत्यवयवं प्रतिफलितैः दर्पणान्तरे इव प्रतिविम्बितैः निरुपधिविभ्रमैः अकृत्रिमविलासैः । कपटोऽस्त्रीव्याजदम्भोपधयश्छद्मकैतवे इत्यमरः मुग्धाक्ष्याः सुन्दरदृशः कटाक्षैः दृष्टिविक्षेपैः निचोलितेन छादितेन निविडितेनेति यावत् । मम वपुषा शरीरेण कर्त्रा तत्काले प्रत्यङ्गप्रतिफलितकटाक्षनिचोलितत्वावसरे सहस्राणां नेत्राणां समाहारः सहस्रनेत्री तया संकीर्णा व्याप्ता आप्तेति यावत् । शतमखमूर्त्तिः महेन्द्रशरीरं अन्वकारि अनुकृता । तथा च सुन्दरदृशस्तस्या अकपटविलासभङ्गी तरङ्गित कटाक्षप्रतिविम्बपूरितावयवशालिनि स्वशरीरे तस्य अपरिमित नेत्रपूरित्वात् महेन्द्रस्य दशशतनेत्रपूर्णा मूर्त्तिरनुकृतेति भावः।

तदिदमिति । तदिदं शतमखमूर्त्त्यनुकरणमित्यर्थः । तरङ्गितदृष्टिलक्षणन्तु वेलाचञ्चलेत्यादि पद्यव्याख्याने स्पष्टीकृतम् ।

(६४)सञ्जातविचिकित्सः उत्पन्नसंशय इत्यर्थः ।

(६५)इदमिति। द्रुतहिमकर स्यन्दशिशिरे द्रुतः द्रवीकृतः यो

कटाक्षे वामाक्ष्या निपतति यदङ्गं पुलकितम्।
कथं नामैतत् स्यात् कथय मम तत्रैव समये
यदुद्भिन्ना मग्ना मुकुलपृथुला स्वेदकणिकाः॥

कलः। चकितं। (६६)

ह्लादन तापन शक्ती सहजेस्तः सुभ्रुवां कटाक्षेषु।
तत्राद्या प्रबला स्यान्नेदीयस्त्वे परा दवीयस्त्वे।

माक। अथ परैरनुपलक्षितेन चतुरमुखी कराङ्गुलि-चलनेन किञ्चिदिव चकिताङ्गी व्यावृत्य मदभिमुखं मुखं मन्दाकिन्यभिमुखी

---

हिमकरः चन्द्रः तस्य स्यन्दवत् शिशिरे शीतले वामाक्ष्याः सुन्दरदृशः कटाक्षे दृष्टिविक्षेपे निपतति सति अङ्गे शरीरे पुलकितमिति यत् इदन्तावत् युक्तं न्याय्यमित्यर्थः। अति शीतलवस्तु सम्पर्के रोमोद्भेदस्य आनुभविकत्वादिति भावः। तत्रैव समये शीतलकटाक्षनिपतनसमयेव मग्ना मुकुलपृथुलाः स्वेदकणिकाः मम अङ्गे उद्भिन्ना इति यत् एतत् कथं नाम युक्तं स्यात् कथय। उष्णकार्य्याणां स्वेदकणिकानां शीतल-वस्तुसम्पर्कादुद्गमः कथं न्याय्य इति शङ्केति भावः॥

(६६)ह्लादनेति ह्लादनाच तापनाच ह्लादनतापने तेच ते शक्तीचेति विग्रहः। ह्लादन शक्तिस्तापनशक्ति रिमे द्वे चेत्यर्थः। सुभ्रुवां कटाक्षेषु सहजे स्वभावसिद्धे स्तः वर्त्तेते संशय समाधायकं हेतुमुपन्यस्य तं परि-हरति। तथाच कटाक्षाणां उक्तशक्तिद्वयरूपकारणशालित्वात् तन्निपतने शक्तिद्वय कार्य्यभूतपुलकितस्वेदकणिकानां एककालिकतया समुन्मेषो युक्त एवेति भावः। तयोश्च शक्त्योर्विशेषस्तु कालभेदेन इत्याह। तत्रेति। तत्र ह्लादनतापनशक्त्योर्मध्ये आद्या ह्लादनशक्तिः विषयस्येतिशेषः। विषयस्य कटाक्षविषयीभूत वस्तुनः नेदीयस्त्वे सामीप्ये प्रबला स्यात् परा तापनशक्तिः दवीयस्त्वे दूरस्थत्वे प्रबला स्यादिति योजना। तथाच

आरक्त कोकिलकलस्वनभङ्गिभाजा
वाचा नमो भगवतोति समालपन्ती ।
सा मम्, खादनपकृष्ट कटाक्षमेव
मूर्द्धाचलन्मधुकरेण शनैरनंसीत् ॥

कलः । उचितं तद्दिदृग्भिन्नो यत् सदाचारे प्रवर्त्तनम् ॥

मारुतः ।

(१७) कण्ठे निवेश्य विधृतां स्फटिकाक्षमालां
मन्दाकिनी स्पृशति तां शिरसा करेण ।
वत्से ! लभस्व पतिमात्मगुणानुरूपं
इत्याशिषं व्यधित मामवलोकयन्ती ॥

कलः । स्वगतम् । एतेन वयस्य एवानुगुण इति दर्शित-
न्तया ।

मारुतः । गृहगमनाय कृतप्रणामास्व तां वत्से !

---

शक्तिद्वयस्य क्रमाद्विषयवस्तु नेदीयस्त्व दवीयस्त्वाभ्यां प्रावल्य सम्भवेऽपि तत्-काले शक्तिद्वयेऽन्यतरस्यापि स्वभावसिद्धत्वेन यथावत् सार्वदिक् कटाक्षवृत्ति-मत्तायां न हानिरित्यतः ह्लादनशक्ति प्रावल्य कार्य्यभूत पुलकोद्भेदसमये तापनशक्ति कार्य्यभूतस्वेदकणोद्भेदाऽन्याय्यत्वशङ्कायाः परिहार इति बोध्यम् ।

(६७)कण्ठे निवेश्य विधृतां स्फटिकाक्षमालामित्यत्र । मन्दाकिनी कर्त्री करेण विधृतां स्फटिकाक्षमालां शिरसा शिरोमार्गेण स्वस्येति शेषः । स्वस्य कण्ठे निवेश्य तां नायिकां स्पृशति अस्पृशत् वर्त्तमानसामीप्ये वर्त्तमानवद्वेति भूतस्य वर्त्तमानासन्नत्वाद्वर्त्तमानप्रयोगः । स्पृशतीत्यत्र करणस्य करेणेत्यस्य गम्यमानत्वादप्रयोगः । उत्तरार्द्धे च मन्दाकिनीत्येव कर्तृ पदम् । स्पष्टमन्यत् ॥

सोऽयं कुन्तलेश्वरामात्यस्य निजतनयप्रभावापवर्ज्जित सकलचतुरन्तवीर मणिमुकुटोल्लिखित चरणपीठस्य विशद यशः कलिका कल्पितदिक्पाल कामिनी कर्णपूरस्य भुवन मङ्गलपुण्यावदात कर्म्मणो ब्रह्मदत्तस्य क्षीराम्बुधेरिव कलानिधिस्नन्दन गिरेरिव गन्धवाहः गौरी प्रसादलब्धः सहजहार प्रकाण्ड लाञ्छनः कुमारो मारुतो नाम सम्भाव्यता मापस्नेनेति व्याहृतवती।

कल:। सविस्मयम्। अहो महाप्रभावा मन्दाकिनी। यतः। हिमगिरि कटकादागतापि अपरिचितमेव तातं जानाति वर्णयति च वरलाभवृत्तान्तम्।

मारुत:।

इति वर्णिताभिजन्मनि मयि वाला पृच्छतीव नयनेन।
सानन्दं सानुनयं सस्पृह सव्रीडसबहुमानेन॥ (६८)

(६९) अथ मया सम्भावितोऽस्मि भगवति सकलेन्द्रिय संवननेन दर्शनेन मण्डयतु गृहान् नन्दयतु क्षणविरह निःसहान् बन्धुजनान् इति व्याहृते ससम्भ्रम सौविदल्ल·

(६८)इति वर्णिताभि जन्मनि इति॥ मयि इति उक्तप्रकारेण वर्णिताभि जन्मनि परिकीर्त्तितान्वये सति वाला सानन्दं सानुनयं यथा तथा सस्पृह सव्रीडसबहुमानेन नयनेन पृच्छतीवेत्युत्प्रेक्षा। नयनावलोकनेन प्रश्नः प्रतीयते इति भावः। पृच्छतीवेत्यत्र भूतकालिकस्य प्रश्नस्य वर्त्तमानकालासत्त्वात्वर्त्तमानसामीप्ये वर्त्तमानवद्वेति वर्त्तमानप्रयोगः। तथा च अपृच्छदिवेत्यर्थः॥

(६९) अथ मया सम्भावितोऽस्मीति। सकलेन्द्रिय संवननेन इन्द्रियग्रामवशङ्करेण वशक्रिया संवननमित्यमरः। कण्ठीरवस्य प्रवहणाः

दर्शित सरणिः आश्रमाभ्यर्णतः तस्य कर्णीरथस्य सविधं
सह परिजनेन मम चेतसा च गतवती ।

गमनसमये साचीभूत त्रिभागमुखी सखीं
किमपि किमपि स्मित्वा स्मित्वा वदन्त्यनुयायिनीम् ।
मदिरनयना मध्ये मध्ये कटाक्ष मनुक्षणं
मम हृदि सखे ! मारब्रह्मास्त्र कल्पमकल्पयत् ॥

(७०) तया गाढ़ं मुक्तो भ्रुवि धनुषि सन्धाय निशितः
कटाक्षेषुर्नान्यैः सह पठनयोग्यः शरगणैः ।
पतन् गात्रे गात्रे परमनृतमास्नौदिव तदा
दवीयान् अद्यायं दलयति पुनर्न व्रणयति ॥

कल्लः । दुर्मोचोऽयमिति गाढ़ोऽभिनिवेशः ।

---

स्वस्य राजदारादि योषिदारोहणार्थं रथविशेषस्येत्यर्थः ॥ कर्णीरथं प्रवहणं डयनञ्चेति कथ्यते इति हलायुधः ।

(७०) तयेति । तया भ्रुवि धनुषि इति व्यस्त रूपकं सन्धाय संयोज्य गाढ़ं दृढ़ं मुक्तः निशितः तीक्ष्णः अन्यैः शरगणैः लोकप्रसिद्धैः रामबाणादिभिरित्यर्थः । यद्वा अर्द्धचन्द्रभल्लप्रभृतिभिरित्यर्थः नसह पठनयोग्यः सह भावोक्त्यनर्हः तेभ्योऽप्यौत् कृष्यादिति भावः । कटाक्षो दृष्टि विक्षेप एव इषुः गात्रे गात्रे प्रत्यवयवं वीप्सायां द्विरुक्तिः । पतन् सन् तदा पतनसमये परं केवलं अमृतं सुधां आस्नौ दिव अभ्यषिञ्चदिव इत्युत्प्रेक्षा । अयं पूर्वोक्तः कटाक्षः अद्य दवीयान् दूरस्थः सन् विषय भूतमदवयवानां असमीपवर्त्ती सन् इति यावत् । दलयति खण्डयति प्रत्यक्षा भावान्मिथ्या इति शङ्कां परिहरन्नाह ॥ पुनः किन्तु न व्रणयति व्रणयुक्तं न कुरुते ॥

माधवः ।

सा बाला मम हृदयं तस्मिन्नेव क्षणे प्रविष्टाभूत् ।
लावण्यामृतधारा परिपीता नेत्रचुलकाभ्याम् ॥ (७१)

साश्चर्यम् ।

(७२) ग्रसति कोऽपि विमोह विधुन्तुदो
हृदयचन्द्रमसं मम दारुणः ।
तदपि हन्त तदन्तर शायिनी
लगति चिह्न मृगीव मृगीक्षणा ॥

अद्य खलु

किं तिष्ठामि किमु व्रजामि किमहं जागर्मि निद्रामि किं

---

(७१) सा बालेति पद्ये । नेत्रे एव चुलकौ करतलमध्यदेशौ ताभ्यां इति मयूरव्यंसकादि समासात् परिणामः । अन्यथा नेत्रयोः पानक्रियायां करणत्वस्य आनुगुण्याभावात् ।

(७२) ग्रसतीति । दारुणः कोऽपि अनिर्वचनीयः विमोह एव विधुन्तुदः राहुः हृदयमेव चन्द्रमाः तं ग्रसति । तदपि तथापि हन्त इत्याश्चर्यं । मृगेक्षणा कर्त्तृभूता चिह्नमृगीव । इत्युपमा तदन्तर शायिनी हृदयान्तरालवर्त्तिनी अन्यत्र चन्द्रान्तरालवर्त्तिनी लगति सङ्गच्छति । लगे सङ्गे इति धातोः परस्मैपदाल्लट् यथाच चिह्नमृगी स्वाधारे चन्द्रमसि ग्रस्यमानेऽपि स्वयमनुपद्रुता तदन्तवर्त्तित्वेनैव तत्र सङ्गच्छति तथा सम्प्रति भावनानायिकापि स्वाधारे मनसि मोहेन विलुप्यमानेऽपि स्वयमनुपद्रुता तत्र तदन्तर्वर्त्तित्वेनैव सङ्गच्छति इत्यत एव आश्चर्यमिति भावः । इत्यञ्च मम मोहविलुप्तहृदयत्वेन सर्वस्मृतिनाशसम्भवेऽपि नायिका स्मृतिर्न नश्यतीत्यहो इति निष्कर्षः । इह विस्मयबीजन्तु आधारस्य मनसो नाशेऽपि आधेय भूतसंस्कारसम्भावया नायिका स्मृतेर्नाशाभाव इत्येवेत्यवगन्तव्यम् ॥

किं जानामि किमु भ्रमामि किमु वा सुख्यामि,दुःख्यामि वा ।
किं नास्म्यस्मि किमित्य नल्पकल्पिते न क्वापि पक्षे स्थितः
प्राप्या निर्वचनीयमेव कमपि क्रूरं विकारं सखे ! ॥ (७३)

कलः । अपि श्रुतानि तस्याः कुलनिवासनामानि ।

मारुतः । अथ तस्यामारूढ़ कण्ठो रथायां गतायां कुतूहल्यपि (७४) नियमातिपात माशङ्कमानो नाप्राक्षं मन्दाकिनीम् । अपि तु प्रणम्य शिविरमागत एव । अथवा अलं श्रुत्वा ।

यदि सा मानुषकन्या जन्म च निर्णीय तां अजीमकुले ।
उत्पन्ना चेल्लक्ष्मीः पयः पयोधेर्न पल्वलतः ॥

कलः । श्रुतानुसारेण कल्पयामि । तस्या अपि हृदयप्रविष्टो मकरकेतुरिति । पश्य

रोमाञ्च स्फुरणमथोत्तरीय कम्पो
भ्रूवल्लो लसितमपाङ्ग रिङ्गणानि ।

---

(७३) किमिति । हे सखे ! अनिर्वचनीयं क्रूरं कमपि विकारं विकारविशेषमित्यर्थः । प्राप्यैव अहं कर्त्ता तिष्ठामि किं ? व्रजामि किमु ? जागर्मि किं ? निद्रामि किं ? जानामि किं गोचरज्ञानवान् वा इत्यर्थः भ्रमामि किमु ? सुख्यामि किमुवा ? दुःख्यामि किं ? नास्मि किं ? अहं न मारुतो न भवामि किं ? इत्यर्थः । अस्मि किं ? मारुत एव भवामि किं ? इत्यर्थः । इति उक्तप्रकारेण अनल्पकल्पिते बहुप्रकारकल्पिते पक्षे क्वापि एकत्रापि एकस्मिन्नपि पक्षे इति यावत् । न स्थितः इति योजना ।

(७४) नियमातिपातं नियमस्य परदारवैमुख्यरूपस्य अतिपातं व्यतिक्रमं भङ्गमिति यावत् ।

कान्तानामिति परमाप्य रागचिह्नं
प्रस्थाने विवलित वक्त्रमोच्चितश्च ॥

मारुतः । ननु स्वाभाविकान्यपि विभ्रमणीयानामेतानि चेष्टितानि । अथवा स्फुटीभवत्य चिरेणैव ।

कलः । विलोक्याश्चर्यम् ।

(७५) विताने माल्यानि प्रति नवसुधा स्रज्ञि जहतः
पलायन्ते भृङ्गाः किमिति कलभङ्कार मधुराः ।
अये ! घ्राणायुष्यं कथमपि समीरैर्धृत भरः
प्रतीहारद्वारात् परिवहति कोऽयं परिमलः ॥

मारुतः । तस्यास्तन तटविलास लासिकाया
मालिकायाः सौरभं संवदति मेदुरोऽयमामोदः ।

प्रविश्य प्रतिहारी । प्रणम्य । जेदु जेदु कुमारो । एसा कावि करगश्च समग्ग समुग्गश्च दिव्वपरिमलभमिर भमर-माला संकुलिश्रा श्रमणमग्गा श्रवरेव कालिन्दी कुमारं दट्ठु कामा पड़िहार भूमिं मि वट्टइ ।

मारुतः । प्रवेश्यतां ।

प्रतीहारी । तह । इति निष्क्रान्ता ।

मारुतः । कथं ते प्रतिभाति ।

कलः । अनन्य साधारणमेतत् सौरभाद्वैतम् । तेन तर्कयामि सैव मालिका समानीतेति ।

---

(७५) विताने इति । पतिनवसुधा स्रज्ञि अभिनवामृत सावीथि इत्यर्थः । घ्राणायुष्यं घ्राणस्य घ्राणेन्द्रियस्य आयुषंत्र आयुष्कारं यथा तथा कथमपि प्रवेशप्रयासकार्कश्येनेत्यर्थः । परिवहति इति सम्बन्धः ।

मारुतः । निःशृङ्खलमनोरथ गगनलता कुसुममपि शेखरयितु मिच्छसि । अथवा अनुपदमेव ज्ञास्यते ।

ततः प्रविशति प्रतिहार्य्या निर्दिश्यमान मार्गा यथोद्दिष्टा कालिन्दी ।

कालिन्दी । सविस्मयम् । स्वगतम् । उदारा क्खु मारुअस्स विभुदा सामग्गी । एद क्खु हि । दोव्वारिआ वारिअदंसणो अंगराअ मेत्त मंडणमंडिए क्कदेसो ज्जमिअ दोघट्ट करपुक्ख रुक्खित्त सदसलाहच्छत्त सिहरत्थ वाढ़ त्त नक्खत्तमाला चिन्तिय हिअहो पविसंतणो सरंत वारसुंदरी चरण मणिसद्दाल मुहरपेरंतो महाराआणं विअ पड़िहारो परिक्कामइ ।

प्रती । यिदो यिदो ।

कालिन्दी । सर्वसुखमनुभूय । स्वगतम् । औदिअहंमि विचंदिआलिंगिअं विअ सरीरं विस्सण्ड । मारुअस्स हार जसाए जोण्हाए होदव्वं । साशंसं । (७६) अवि णाम पिअसहीए मल्लिआए वअणं अणुरज्जइ महाभाओ ।

प्रति । प्रतिषिद्धं पड़मण्डपद्वारम् ।

उभे प्रविशतः ।

कालिन्दी । जेदु महाभाओ ।

मारुतः । भद्रे ! इतस्तावत् ।

कालिन्दी । कलकण्ठं विलोक्य । स्वगतम् । कोएसो । कणअ-

---

(७६)साशंसं अप्राप्तस्य प्राप्तुमिच्छा आशंसा तया सार्कामित्यर्थः ।

कल्लोरगोरं गो अवरो तरुणो। विमृश्य। मसे मारुअस्स-पियमित्तं होज्ज। जो कलकण्ठोत्ति सुणीअदि। प्रकाशम्। महाभाअ! अहं खु भअवदीए मन्दाय णीये अन्ते वासिणी कालिंदी णाम।

मारुतः। ननु दृष्टैव मया तस्मिन् व्यतिकरे।

कालि। महाभाअ! जा किल एक्क सरिए दिट्टा कस्सआ सा उण भअवदीए हिअअ णिव्विसेसा अह्माणं पिअसही म-म्मह मणोहरस्स महाभाअस्स दंसणेण चंदोदिदेव्व कुमु-दिणी विम्ह आणंद परवसा घरंगदुय णिअकंधरावलं विणिं णिव्वणं मालिअं महाभाअस्स हिअओड् एत्ति पेसिदवदी। एत्थ पड़मदंसण मेत्तदिस्स वीसंभा अविस्सा-दाहंकार पेसल गम्भीरा हिअअ हारिणो महाभाअस्स आकिदी एव्व पणअ च वलं तं जणं करेदु। ण उण कुलक-ण्णआ विरुद्धा पअवृभदा। इति पेटकं विघटयति।

मारुतः। सखे! प्रसन्नस्ते तर्कः।

कालिन्दी। मालिकां हस्ते गृहीत्वा। इयं सा।

मारुतः। कालिन्दि! अत्युदारा खलु तत्रभवती। यत् सकृत् दृष्टेऽपि जने एवं नाम प्रसीदति। ततः कथय-कस्य कुलं परिष्करोति। कुतः पुनरस्याधिगम इति।

कालिन्दी। परितो विलोकयति।

मारुतः। चन्दनलते! नियोगमशुन्यं कुरु।

प्रति। प्रणम्य। तह। इति निष्क्रान्ता।

मारुतः। जीवितमेवैषः।

कलिन्दी। सुणादु महाभाओ अत्थि विस्सावसुत्ति दीसंत वीसंत धवल कित्तिप्पभाभारदिसजोण्हा कवलणा-तिण्हा च वलचओर जुअलो महाराअस्स चंदवम्मस्स बहु-प्पई विअ महेंद स्स अमच्चो।

मारुतः। केन न ज्ञायते प्रज्ञागाम्भीर्य सत्य सत्वनिधिः स भगवान् विश्वावसुः।

कालिन्दी। सोहि। अणवच्चदा सोएण दिवाणिसं ढज्झं त हिअओ सअलभुवणेक्कमाई कोमलचरणं गुलो पल्लव पल्लत्थ बुद्धी अवच्च अत्थ अदो कुसुमउरोवकण्ठ वासिणि भअवई गोरिं आराहअंदो आसि एक्कदा उण सिविणअं मिवच्च वीसवसो पसण्णिह्मि तुह असाहारणाए भत्तीए दिस्सं कासयारअणं दिव्वमालिअड पच्चारे मज्झउज्झा-णम्मिमज्झ तुएत्ति आणत्तो देवीए।

मारुतः। सविस्मयानन्दं जनान्तिकं। सखे! सत्यमिद-मेव तत् कन्यकारत्नम्।

कालिन्दी। अह देण हरिस परवसेण पच्चूसे पडि पत्थिअं गदुअ जहणिद्दिट्टारामपेरंत मल्लिआ मूलकलिए किस-लय सअणिज्जम्मि चंदणवसं चार रा अ कुम्मलदामल च्छिआ तवस्सिणी(७७)कावि दिट्टा। कसणा तां अ घेत्तूण गज्जलिअ जज्जरिअंगेण जं मल्लियामूले दिट्ठा देण मल्लि-

(७७) तपस्विनी दयनीया इत्यर्थः। कन्याप्रतिपादने तपस्वीचेति हलायुधः।

एत्ति किअणामहेआ णिअ कुडुम्बिणीए देवीए कमलाए हत्थे दिस्सा।

मारुतः। जनान्तिकं। युक्तमाह। तत्र भवान् विश्वावसु र्मल्लिकेति। पश्य।

सा जाता मल्लिका मूले मल्लिकातल्लजस्मिता।
मल्लिकाचगतिर्बाला मल्लिकेव न संशयः॥

कालिन्दी। साएसा णो पिअसही। इत्थं सामाल्ला। इति मारुतकण्ठे मालामर्पयति।

मारुतः। सरोमाञ्चं। स्वगतम्।

अमृत पृषतलेश स्यन्दिनी मालिकेयं
स्तन ट्टत्तण विमर्दैः पाटलापक्ष्मलाच्याः।
मदन दहन दग्धं जीवयत्यङ्ग मङ्ग
कुमुद मुदयरक्ता कौमुदीवार्कं तप्तं॥

प्रकाशं। विश्वश्लाघ्यः स भगवान् विश्वावसुः। यस्यैवं जनकस्येव सीता द्रुपदस्येव याज्ञसेनी पुत्त्रीपदमवलम्बते। अहो दाक्षिण्यातिशयस्तत्र भवत्याः। यदपाङ्ग चलनस्यापि योग्ये जने सहज मालादानेन महान्तं प्रसादं प्रकटयति।

कालिन्दी। स्वगतम्। महुरं खु एसो मंतेदि। अहवा कमलाअ रोमअरंद किरंअन्ति किंअच्चरिअं। प्रकाशं। णं पिअसहीए जीविअस्स वि पहवइ महाभायो किं उण मालिआए। ता अणुमण्णे दुमं इमिणा वुत्तंदेण पिअसहिं अहिणंदेदुं।

मारुतः। जनान्तिकं। वयस्य! किमस्यानुरूपं देयं हृदयन्तु प्रागेव प्रयुक्तमासीत्।

कलः । ननु सहजस्य मात्स्य सहजो हारोऽनुरूपः ।

मारुतः । हृदयज्ञ । मन्मनोगतमेवोपन्यस्तम् ।

उचितश्चायं तस्याः स्तनमण्डलस्य

(७८)यदि कुचकलशाग्रे न्यस्यते हारमाला
स भवति निजकुम्भ च्युतनक्षत्रमालः ।
तरुणिममदनेभोऽमुष्य सा पूर्व्ववृत्ता
विलसति मदलेखा रोमलेखा मृगाक्ष्याः ॥

कलः । कालिन्दि ! अस्माभिरपि किञ्चित् प्रार्थ्यसे ।

कालिन्दी । आणवेदु महाभाओ ।

कलः । हारमङ्गुल्या निर्दिश्य (७९)

हारोऽयं मम सख्युराननमलत्वाणो विलासस्मित
सद्योमन्दर भिन्नचन्द्रशकलप्रख्यैः कृतो मौक्तिकैः ।

---

(७८)अङ्गुतश्योभातिशयाधायकत्वेन स्वभावाया मल्लिकास्तनमण्डलौचित्यं प्रतिपादयन्नाह । यदीति । मृगाक्ष्याः कुचकलशाग्रे हारमाला-मुक्तादिदाम कर्म मुक्ताल्यां हरणे हारः । मालस्रजत भूमौ वा पङ्क्तौ पुष्पादि दामनि इत्युभयत्र नानार्थरत्नमाला । न्यस्यते यदि सः तदीयत्वेन प्रसिद्धः । तरुणिम तारुण्यमेव मदनेभः स्मरसम्बन्धिमातङ्गः निजकुम्भच्युता नक्षत्रमाला सप्तविंशतिमौक्तिकैकावली यस्य स तथोक्तः सैव नक्षत्रमाला स्यात् सप्तविंशतिमौक्तिका इत्यमरः । भवति अचिराद्भविष्यतीत्यर्थः । भविष्यतो वर्त्तमानकालासन्नत्वात् वर्त्तमानसामीप्ये वर्त्तमानवद्वेति लट् । अमुष्य नक्षत्रमालालङ्कृततरुणिम मदनेभस्य सा तदीया रोमलेखा पूर्ववृत्ता पुरोभागप्रवृत्ता मदलेखा मदसलिलधारा विलसति अचिरात् विलसिष्यति । अत्रापि पूर्ववदेव लट् ।

(७९)हारोऽयं मम सख्युराननसलक्षाणो विलासस्मितेति पद्ये । अयं

सूतैर्मध्य महेन्द्र रत्नकिरण श्रेणीभिरारञ्जिता
यत्कान्तिर्यमुनोर्म्मिमिश्रख सरित् कल्लोल हल्लो हला ॥

मारुतः। वयस्य ! वर्णननिपुणोऽसि।

कालिन्दी। णं जाणीअदि एसो जो सहलो त्तिवस्सिदो भअवदीए।

कल। तदेनमपि कृतार्थय तत्र भवत्या।

कालिन्दी। स्वगतं। मसे मारुअदंसणेण किं वि उक्कठी एव्व मल्लिआ ता अह्ने हिं एव्व पत्थणिज्जो संदाव संतीए। प्रकाशम्। रमणिज्जो क्खु तुह्माणं विणिमओ अहं तु जहणिहिट्टं करेमि।

मारुतः। हारं कण्ठादवरोप्य। कालिन्दि ! न केवलमसौ हारो दीयते हरिणीदृशे अहं च तद्गुणक्रीतो दत्त एवास्मि गृह्यताम्।

कालिन्दी। हारं गृहीत्वा सस्मितम्। स्वगतम्। महाराअ

---

अङ्गुलीनिर्दिश्यमान वस्तु इत्यर्थः। विधेयाभिप्रायकं पुस्त्वं मन्दरमिन्नचन्द्रशकलप्रख्यैः सूतैः गुम्फितैः मौक्तिकैः कृतः अतएव मम सख्युः आननगलद्वाणी विलासस्मित स्पर्धी हारः मध्य महेन्द्ररत्नकिरणश्रेणीभिराजञ्जिता यत्कान्तिः यस्य हारस्य कान्तिः यमुनोर्म्मिमिश्र स्वसरित् कल्लोल हल्लोहला यमुनायाः ऊर्म्मिभिः मिश्रा या स्वसरित् गङ्गा तस्याः कल्लोलानां हल्लोहल इव हल्लोहलः क्रीडेव क्रीडा यस्यामिति विग्रहः यमुनासङ्गत गङ्गातरङ्गलीला शालिनीत्यर्थः। प्रयुक्तञ्च हल्लोहलपदं मामकेश्वरतन्त्रे। यथा, काल हल्लोहलोल्लोल कलनाशमकारिणीमिति। तादृशो हार इति पूर्वेण सम्बन्धः।

यत्त वअस्सो होहि। प्रकाशम्। गहीदो एव्व अम्हे हिं ता गच्छेम्ह आसाकरणम्ह।

मारुतः। तथा।

कालिन्दी। निष्क्रान्ता।

मारुतः। सखे!।

जातं कुले महति जन्म वराङ्गनाया:
प्राप्ता च तत् कुच युगान्तर लालिता स्रक्।
भावोदयस्य सुतनोरपरिस्फुटत्वात्
तापस्तथापि हृदये तदवस्थ एव॥

कल। स्फुट एव माल्यदानादिभिरनुरागोऽपि।

मारुतः।

(८०) माल्यदानात् कथं नाम रागसत्ता प्रकल्प्यते।
अन्यदौदार्य्य सौहार्द मन्यदाकूति चेष्टितम्॥

सन्तापं प्रकटयन्।

(८१) नीवारमाच गवाक्षतः प्रभवति द्राक् तत्तदर्थं ग्रहे

---

(८०) माल्यदानादिति माल्यदानात् हेतोरित्यर्थः। रागसत्ता कथं नाम प्रकल्प्यते न कल्पनीयमित्यर्थः। कुतस्तदाह। औदार्य्यञ्च सौहार्दञ्च अनयोः समाहारः। औदार्यं सौहार्दं अन्यत् एकं आकूतचेष्टितं आकूतेन अभिप्रायेण चेष्टितं साभिप्रायकं कर्मेत्यर्थः। आकूतः स्यादभिप्राय इति हलायुधः। अन्यत् अपरं अस्तीति शेषः। इत्थं औदार्य्य सौहार्दाकूतचेष्टितान्यतरत्व सन्देह विषयत्वात् माल्यदानस्य अनुरागसत्ता हेतुत्वेन कल्पनं अनुपपन्नमिति भावः।

(८१) अत्र तु प्रथमार्द्धेन पाप्मसंस्कार मोषरूप प्रतिबन्धकसङ्घाभावात्

स्मर्तुं प्रागनुभूत वस्तु न तथा संस्कारमोषादलम् ।
अद्यान्धं करणेन केनचिदहो पापेन मूकं मनो
मध्याह्ना तप मूढकैरव पुटी मध्यद्विरेफायते ॥

नेपथ्ये वैतालिकौ ।

जय जय जगन्नयन चकोर चन्द्र ! सुखाय ते भवतु माध्यन्दिनी सन्ध्या ।

एकः । नखं पच मधुद्रवं नलिनगर्भमिन्दिन्दिरो
विमुञ्चति सुधीकरे शिशयिसुर्द्विपानां कटे ।
द्रुतं सरसि शैवलोदर कुड़ङ्ग मुष्णालवो
विशन्ति विवशा झषा दिनकरे ललाटन्तपे ॥

---

वीक्षण स्मरणा पाटवनिरूपणद्वारा आत्मनः अपरेणार्द्धेन माध्यन्दिनप्रकाशसङ्कुचित कुमुदमध्यगत चञ्चरीकवदाचरणकथनद्वारा मनसश्च सन्तापातिशयं निरूपयति ।

नेत्रेति आत्मा कर्त्ता अश्रुतः नेत्राभ्यां करणभूताभ्यां तृतीयार्थे तसिः । अक्षं नेत्रे तनुश्चपीत्यभिधानम् । द्राक्झटिति तत्तदर्थपक्षे विषयभूत तत्तद्वस्तु ज्ञाने अच्छमशा नयनजलेन हेतुना वाष्पेणेति भावः । नो वा प्रभवति नैवार्हतीत्यर्थः । वा स्यादथोत्र विकल्पे च समुच्चयेऽवधारणे इत्यभिधानात् । अयं भावः कार्य्य भूते घटादिकविषयवस्तु ज्ञाने कारणयोर्नयनयोः वाष्परूप प्रतिबन्धकवत्ता हेतोः आत्मा कर्तृभूतो न समर्थो भवतीति तथा यथा तत्तदर्थपक्षे न प्रभवति तद्वदित्यर्थः । प्रागनुभूतवस्तु कर्म स्मर्त्तुं स्मरणविषयीकर्त्तुं संस्कार मोषात् स्मृतिहेतुभूतो गुणः संस्कारः तस्य मोषात् अपहारात् हेतोः नालं न पर्य्याप्तः । अयं भावः । कारणभूतस्य संस्कारस्य नाशात् तत्कार्य्यभूता मनुभूतवस्तु स्मृतिं आत्मा न जनतीति । अद्य इत्थमात्मनः सन्तापकाले अन्धङ्करणेन अमन्धं चक्षुं

कुर्वन्त्यनेन अन्वङ्करणः तेन अस्य सुभगस्य उपलितेत्यादिना स्तनु मानवै शून्यत्वापादकेनेत्यर्थः । इक् शून्यत्वापादकत्वञ्च ध्वन्यते केनचित् अनिर्व-चनीयेन पापेनेति पाठः तुच्छः तापेन हेतुना मदनानलजन्मना सन्तापे-नेत्यर्थः ।

मूकं इन्द्रियसंयोगादिव्यापार शून्यं गुञ्जनादिव्यापारशून्यत्वञ्च ध्वन्यते इदन्तु गुञ्जनादिव्यापारशून्यत्वं उपमानभूतस्य द्विरेफस्येति ध्येयं । मनः कर्त्तृ मध्याह्नातपेन मूढं सकुलितं यत् कैरवं कुमुदं तस्य पुटीमध्ये प्रदेशान्तराले विद्यमानो यो द्विरेफः तद्वदाचरतीत्यर्थः । तादृशद्विरेफ सदृशावस्थोऽस्तीति भावः । अत्र मध्याह्नातपग्रहणं अन्तर्वीसानर्ह सन्ता-पातिशय सूचकं इत्थं त्वे अत्रैवाऽनुपदं वक्ष्यते । यथा नवसम्भव मधुद्रवं नलिनगर्भमिन्दिन्दिरो विमुञ्चति इति । मूढपदं वहिर्भावयोग सूचकम् । अहो अद्भूतं इत्यर्थः ।

इयन्तु खेदोक्तिः । ईदृशः सन्तापोऽस्मतदृष्टपूर्वं इति भावः । अत्र वीणया स्मरणाऽपाटवकथनात् प्रयोजनान्तरपरित्यागः सूचितः । अनु-पदवक्ष्यमाणेन यत्र क्षिपामि दृशमन्यदिदृक्षयाहमिति पद्येन मनसा-हृत कान्तत्वं आत्मरामत्वञ्च द्योत्यते । अतो वक्ष्यमाणोऽयं मनसः सङ्गाख्या तृतीया मदनावस्था । तदुक्तं रतिरहस्ये । मनसा हृतकान्ताय विसृज्यान्यप्रयोजनं आत्मारामा भवेत् यत्र चित्तसङ्गरतिर्यथेति । इह बाष्पभरस्मरणाभाव मनःखेदाः नायिका गुणसङ्कीर्त्तन जनित मूर्च्छावशा देव ।

तदुक्तं रसाकरे । वियोगा योगयो रिष्टगुणानां कीर्त्तनात् स्मृतेः साक्षात्कारोऽथवा मूर्च्छा दशधा जायते यथेति मनु । श्रवणं चक्षुःप्रीति मनः संयोगोऽथ सङ्कल्पः । निद्राच्छेदस्तनुता विषयनिवृत्तिस्त्रपानाशः ।

मोहो मूर्च्छामृतिरित्येकादशधा स्मरावस्थाः । स्त्रीणामपि पुरुषाणां एताः सन्दर्शनाज्जाता इति वचनात् । मूर्च्छाया उपान्त्यदशात्वेन कथ-मङ्गशात् मनः सङ्गाख्य तृतीयदशायां बाष्पभरादीनामुद्भूतत्वं इति चेन्न । साक्षात्कारोऽथवा मूर्च्छा इति वचनप्रामाण्यात् । इह मूर्च्छानाम

अपरः । (८२)

तोयं तोयमिति ब्रुवन्ति तृषिताः केलीशुकाः पञ्जरे
धारावारि पृषन्ति यन्त्रभवने लीढे मयूरार्भकाः ।
उद्यानोदर सारिणी परिसरे क्रीड़ा मृगाः शेरते
याता सम्प्रति नूनमातपभिया छायापि मूलं तरोः ॥

---

इष्टगुणस्मरणकीर्त्तनान्यतर जनितो बाष्पभर स्मरणाभावमनःखेदल-क्षणः तत् क्षणिको विकारविशेषः । तत् उपान्त्यदशात्वे तु मोहाधिक्या दशक्त्या तु मूर्च्छाज्ञानक्षयो यथेति । रतिरहस्य वचनात् पूर्वं पूर्वदशा-प्राबल्यक्रमेण मोहदशाप्राप्त्यनन्तरं तद्दशाधिक्याऽशक्त्युभयजन्यो इष्ट-प्राप्तिमरणान्यतररूप परिहारावधिकोज्ञानक्षयो मूर्च्छा इति विवेक सद्भावात् । अस्मिंश्च विषये उत्सङ्गे वा मलिनवसने सौम्य निक्षिप्य वीणां साधन्यस्ताभरण मबला पेशलं धारयन्तीति मेघसन्देश पद्यद्वयव्याख्याने निखिलमपि विशदम् । इह उपमानोपमेययोर्मनोभ्रमरयोः उपादान मस्ति साधारण धर्मस्य खेदस्य तु नोपादानं अतो धर्मलोपः खेदेन मध्याह्नातपमूढकैरवपुटीमध्य द्विरेफायते इत्यपि वक्तुं शक्यत्वात् द्विरे-फायते इत्यत्र द्विरेफवदाचरतीति कर्त्तृरूपादुपमानात् सुबन्तात् सदृशा-चारे क्यञ्चि क्रियमाणे मध्ये उपमावाचकस्य लोपात् वाचक लोपः इत्थ-मुपात्तोपमानोपमेयकत्वे सति लुप्त धर्म वाचकत्वात् धर्मवाचकलु-प्तोपमालङ्कारः । अथवा तापेनेत्यस्य द्विरेफवदाचारे हेतुता तथा च द्विरेफवत् परितप्यते इति भावः । अस्मिंश्च पक्षे तापेनेति साधार-णधर्मस्याप्युपादानात् वाचकलुप्तोपमालङ्कारः । यत्रौपमानधर्माणामुपमा वाचकस्य च एकद्वित्र्यनुपादानात् भिन्ना लुप्तो पमाष्टधेति लक्षणात् । शार्द्दूलविक्रीड़ितं वृत्तं मसजसतताः शार्द्दूलविक्रीडित केन गौरविवि-र्यतिरिति लक्षणात् ।

(८२)तोयं तोयमिति । लीढे लेढीत्यर्थः । लिह आस्वादने इति

उभावाकर्णयतः ।

कल । स्वगतम् । भवलस्मादभिषङ्गात् आक्षिप्य मज्जनगृहं नयामि । प्रकाशम् । अतिक्रामति स्नानकालः । पश्य । परितो घटित घटीयन्त्र वान्तजल शीकर शीतलाराममारुत सञ्चार सञ्जातापोदयं समयम् ।

मारुतः । विलोक्य । सखे !

यत्र क्षिपामि दृशमन्य दिदृक्षयाहं
तत्राग्रतः स्फुरति केवलमेतदेव ।
तद्वक्त्र बिम्बमरुणाधर लोभनीयं
ते लोचने तरलसालसमीक्षितञ्च ॥

साभिलाषम् ।

मन्येऽद्य श्रमवारि भिन्नतिलका सेवेत वल्लीगृहान्
आलीनां करताल वृन्त पवनैः संवाह्यमाना शनैः ।
आहोस्वित् बिसभङ्ग कङ्कणवती पत्राम्बु सिक्ताम्बरा
कर्पूरार्पण पाण्डुरस्तनभरा वर्त्तेत धारा गृहे ॥

निश्वस्य । (८३)

पश्यामि चित्तफलके लिखितां सङ्कल्प शिल्पिना बालाम् ।
साकूतमीक्ष्यमाणां स्मयमानमुखीं सविभ्रमं यान्तीम् ॥

प्रविश्य प्रतिहारी । कुमार ! भट्टिणो सविहं पेसिदो

---

स्वरितेतो धातोः कर्त्तरि खडात्मनेपदैक वचनम् । सारिणी कुल्या स्वल्पनद्याञ्च सारिणीति मेदिनी ।

(८३)पश्यामीति । सङ्कल्पोऽध्यवसाय एव शिल्पी चित्रकारः तेन कर्त्रा चित्तं मन एव फलकं तस्मिन् लिखितां सुगमसन्यत् ।

भमरश्रो कुंतलेसर णश्ररादो पश्चागश्रो कोमल दुउल-सुहिश्र चित्तफलश्र इत्थो दुवारम्मि वट्टइ। सोहि चित्त-फलश्रो पाहुडीकियो (८४) सिम्हल दीवामएहिं णाविएहिं श्रह्माण महाराश्रस्स।

काल। ननु विशिष्टवस्तु दृशं प्रेषयति वत्सलो महाराजः।

मारुतः। जनान्तिकं। किं चित्रान्तरदृशनेन। पश्यामि चित्तफलक इत्यादि पुनः पठति।

कालः। स्वगतम्। दुर्निवर्त्योऽयमत्यासङ्गः। प्रकाशम्। चन्दनलते! स्नानाय उच्चलितो वयस्यः मज्जनगृहमागच्छतु भ्रमरकः।

इति निष्क्रान्ताः सर्वे।

इति श्रीमत् कविकुलतिलकेन श्रीसरस्वती विक्रमार्क-प्रमुख बहुमतसाहित्यवैभवेन श्रीदण्डयाचार्य्येण विरचिते श्रीविक्रमार्क राजन्य सत्कारभूते मल्लिकामारुते प्रथमोऽङ्कः।

(८५) उद्दण्डं रङ्गनाथः सुतमलभत यं रङ्गदेवी तथाम्बा,
त्रैविद्येशो महर्षि र्निरवधि महिमा यद्गिते जागरूकः।

---

(८४) पाहुडीकिश्रो प्राभृतीकृतः उपायनीकृत इत्यर्थः। प्राभृतन्तु प्रदेशनं उपायनमुपग्राह्यमित्यमरः।

(८५) उद्दण्डमिति त्रिविधा आध्यात्मिकाऽऽधिभौतिकाऽऽधिदैविकत्वेन विद्या त्रिविधा तां विदुः त्रैविद्याः अङ्ग यज्ञधर्म त्रिपूर्वाद्विद्यान्ताश्चेति वक्तव्यमिति ठक् प्रतिषेधः। तेषां ईशः त्रैविद्येशः त्रिप्रकारक विद्या-प्रवीणश्रयं इत्यर्थः इति व्युत्पत्त्या त्रया च त्रैविद्येशनामा निरवधि-

तस्य श्रीविक्रमाख्या बहुमति रचिते मल्लिकामारुतेऽस्मिन्
आद्यः प्रागात् दशानां प्रकरणतिलके निष्कलङ्कोऽयमङ्कः।

---

## द्वितीयोऽङ्कः।

ततः प्रविशति चेटी।

चेटी। सविषादम्। इत्थि वलियं क्खु उम्मादिआ सिरीस कोमलंगी भट्टिदारिया पवलेण दिणअरस्स दावेण अह वा मं महेण वा। जं मज्झम्मि विअ धाराधरगब्भ घुमस्स अणुक्ले वि आअवोण णिग्गच्छइ। मसे तस्स

---

महिमा महर्षिः यस्य उद्दण्डकवेः स्थिते जागरूकः निस्तन्द्रः उपेक्षारहित इत्यर्थः। जागरूक इति सूत्राज्जागर्त्तेरूक् प्रत्ययः जागरूको जागरित इत्यमरः। निर्गतः कलङ्को यस्मात् स निष्कलङ्कः दुराह्न निर्देशादिदोष शून्य इत्यर्थः। यदुक्तं अङ्कदोष प्रस्तावे। दूराह्वानं वधं युद्धं राज्यदेशादिविप्लवम्। संरोधं भोजनं स्नानं सुरतं चानुलेपनं अम्बरग्रहणादीनि प्रत्यक्षाणि न निर्दिशेदिति अङ्कलक्षणन्तु समस्तपात्र निष्क्रामावसानोऽङ्कोऽभिधीयते इति।

इति मल्लिकामारुतव्याख्याने
प्रथमोऽङ्कः।

---

एव्व मह्हाभाअस्स वअणाया मुणाईगअं विसमअं। (१) साशंसं।
अवि णाम सो वि एव्व हवे तदो किसाम णाजियं परम्परा-
णुराअ घडणा सिलाह णिज्जेण भअवदा रइ वल्लहेण।
पुरतो विलोक्य। एसा पियसही मह्हाभाअ मारुआणुअर
स्स वल्लहा कंकेल्लिआ कंकेलि पल्लव पाण्डु दुऊल वासिणीं
किं वि हरिस परवसा इदो एव्व आअच्छइ।

ततः प्रविशति कङ्केलिका।

कङ्के। पियसहिए णो मालिआए सुहादो भट्टिदा-
रिआए पवुत्तिं जाणामि।

प्रथमा। उपसृत्य। सहि! सअं एव्व किं वि किं
वि मंतअंती समी वट्टिदिअं वि मं अणालवंदी धावसि।

कङ्के। विलोक्य। सहि पवालिए! मा कुप्प मए खु
कज्जंतर खित्त हिअआए णालक्खिआसि।

प्रवा। सहि! महुरिए! ण तक्केमि आगओ तुह पड़ि
वल्लो सो मारुओ त्ति।

कङ्के। सव्रीड स्मितं। सहि! सच्चं आगओ अदो एव्व
मह पइद्दं सम अब्भि लंवो णमुक्कं मित्तेण चिरदिट्ठेण
तेहिं आलाबेहिं।

प्रवा। सहि! कहं णाम मुंचइ कंकेलिअं भमरओ।

---

साशंसं अप्राप्तस्य प्राप्तुमिच्छा आशंसा तया सह यस्मिन् कर्म्मणि
तद्यथा भवति तथा अवश्य लब्धव्यमिदं कथं लभ्येत इत्याशयेन साकम्।
इत्यर्थः।

अह्नकहियो मालअस्स वावारो किं सुणाइ किं भणइ किं कुणाइत्ति

कड्ढे । एत्तियं कहिअ अदिसइए लोअस्सआए दिव्वं तराअअं चित्तफलए पड़िच्छंदं विलोअअंदो सअंवि चित्त प्पिओविअ चिट्ठइत्ति । खड़िअखु आसातंतुणा एसाखु । तवस्सिणी तस्स पुढमदंसणविअगिह्नु ह्नदा बिदख व्वमु-ह्नमोरी अहिअदरं किलंमइ । प्रकाशं । सहि ! किंतं क-ज्जंतरं जेण अक्खित्त च्चिअआसि । तएह्नि एदं पविच्चिद अंबरंदादूण समाणयंतेण णियसामिव अणादो अह्माणं भट्टिदारिअं दट्टु कामेण अगदो पवुत्तिविसाणि णाउ-त्तह्मि ।

अवा । स्वगतं । एण किंविसा सं च्चिअअं ।

प्रकाशं । सहि ! दुऊलव्वसंगेण निवेदेमि अज्ज रअणवदिणामहेयेण सत्यवाह च ककबट्टिणा भट्टिणाऽमिच्चस्स उवाअणो किअं वालग्गण कुय कुप्पल सरसे रत्तकरंडए वड़िअं दिव्वं तराणेदं एक्ककिमिहर बसणं ।

कड्ढे । किंतुए दिट्टं ।

अवा । भट्टिणा आवट्टिअंस विघड़िय घरं सअं एव्व देवीदं सणाध आए भअवदीए मंदाइणीए हत्थे ओव्विअं दिज्जउ तुह्नवच्चाए मल्लिआ एत्ति ।

कड्ढे । तासुलहंखु तस्स दंसदं अह्माणं । अह-कहेहि को उण संवरअस्स किए राअणिव्वंधसस्स पसंगो ।

अवा । पमाणमाहिदो खु भट्टिणाऽमच्चेण मल्लिआए णाहं पमाणं अविदु भअवदी कन्नाइणी एव्वत्ति ।

कञ्चु । सानन्दं । सुठ्ठु पव्वा ब्बादो इदासो संवरश्ची कहेहि तुमं उण कुदो आअच्छसि ।

प्रवा । अहं खु अज्ज गौरीघरादो पडिणिवुत्ता भट्टिदारिआ सूरलि सूरगहत्थीहिं कवत्थि अत्ति सुणिअ उझ्झंतीए आणात्ताविदं अवुत्तं दाणि वट्टेमि ।

कञ्चु । जइ एव्वं कहेहि भट्टिदारिआ कहिं वट्टइ ।

प्रवा । कस्साणुमेअ फलिहभित्ति भाउक्कस्स चंद-मंडलव्वणाल वोलीण जंतवारि तुसारो सारज्झडिले कोमलजलोद्दावि आणलंविअ मालइ मालहारिणी वप्फ-दक्खमोत्ति । अक्खोदवालु आ वलणाल्लीण वासकित्ति सारसी सरत्त चंदणवारि वचहेधाराघरम्मुणालमेत्ता हरणा सो-अल चंदमणि सिलाघंसिअ विअट्टि उच्चंगविस्थारिए कुसुम सअणिज्जे दलि अकेलीदल केलं तलवेट्टाए वोज्जंतीए पिअ सहीए णोमालिआए उवासिआ कालिंदो मुहादो मालिआ अणवुत्तंदं साअरं आयेस अंदो वट्टइ ।

नेपथ्ये ।

हला कालिन्दि ! उभे आकर्णयतः ।

प्रवा । सहि ! दाहिणेन केलिदोहिअं सुणीअदि कोइल पंचमकोमलो भट्टिदारिआए आलावो मसे हव्भिअ धाराघरा मात्तिअ मंडवं आगअत्ति ता ज्जुत्तणि वारिअ परिअणाए परिसरे ठादुं ।

इति निष्क्रान्ते ।

प्रवेशकः ।

ततः प्रविशति उत्कण्ठितोपविष्टा
मल्लिका कालिन्दी नवमालिका च

मल्लिका। तदो तदो ?।

कालिन्दी। तदो अदेण महाभाएण साणुणअं सप्पणअं एव्वं णाम आणत्ता ह्यणोवअरणतुवरं दवार सुंदरीकरो- दृसिं अकं च कुंभं पिंजरिआ अवेण दुवारेण निग्गमिअ आअदह्मि।

मल्लिका। स्वगतं। सहि ! सहजे मालिए धसातुमं सिला घणिज्ज सोभग्गा सित्त मुहुत्त जाआणं वि अह्माणं हविहं एव्व कङ्क फलं ज एक्क वदृसिअ ईसि विहसन्ततावेच्छ सामलकोमलंगस्स तस्स णोसंकक्कंठग्गाह भाअणं संवुत्तासि।

प्रवा। दिट्टिआ ण कओ महाभाएण पढमव्वणअ भंगो।

कालिन्दी। जादे ! णं गिअकंधारादो अवरो विअ सह स्रेण दिण्णो सरअतरो ज्ञिपंधरो हारो सो एसोत्ति। मल्लिकायाः कण्ठे हारमासज्जति।

मल्लिका। सहर्षरोमाञ्चं। स्वगतम्। संस्कृतमाश्रित्य।

तानालोकरदत्तशीतलविधीनारभ्य तद्दर्शनात्
यामन्ये वड़वानलानिव वपुर्दाहे न मोहाकुला।
सा जाता तदङ्ग सङ्ग सुभगे हारेऽधिरूढ़स्तने
सर्वाङ्गे स्थगितेव साम्प्रत मद्दो सौधाकरैः मण्डलैः॥

नवमालिका। जनान्तिकं। सहि कालिन्दि ! जदृच्छिअ विसट्ठकंदोट्ठदलदामदीहरसिणि छेहिं दिट्ठि वाएहिं पञ्चक्खी किदो सो महाभाओ। तदप्पहुदि अणुक्खणवड्ढन्तेण

अगंम रूवेण केणवि अणलेण वलिअं किंमइ भट्टिदारिआ विचण किलि क्किम्भिअ मंजुव अणो सुपंजर जमेसिण णिलक्कइ सुलहमलअ मारुअं कोलाप्पासादंगुण गुंजइणं उब्ब- एसु सहअरी संल्लाविसु ढढ्ढुलउण परमुणालं घड़िय हारा धाराघरेसु वेढइ विहडिदमालं रहन्त मौसालिए वल्लव सअणिज्जेसु गुम्मइ वोम्माणि दल धवित्तदल संचारिएहिं मारुएहिं हुल्लइ पुणो पुणोवि पक्खि आदो वअणादो मंवइ खणेखणे णिंहुअ णिग्गमिणी रआसं। अज्जउण सख- तमाश्रित्य।

कलयति तदुदन्ताकर्णनेषु प्रसक्तिं
क्षणमपि क्षणमपि मध्ये निश्चला ध्यायतीव।
अपिच वहति हारस्पर्शमात्रेण बाला
पवनचलकदम्बोद्भेदतुल्यामवस्थां॥

ता लज्जाणुआणभणाइ अप्पणोव्व अवलं विणो मअणा- विसं। अह्मे उण वाअइ सामो मित्तसंकामिदो खु सज्झो होज्ज संदावो। मल्लिकां प्रति। सहि! कालिन्दो भणाइ रंजण लक्खणा राआणो सेवा लक्खणा वरिअणो। वेम्मल- क्खणाइ मिहुणाइ वीसंभ लक्खणाइ मित्ताइ ता सहपं- सुकीलणादो आरहिअ अविभक्कसुह दुक्खे जणे णाउत्ता अवहित्थेत्ति ता कहेहि मज्झे भअ संविभाएण लहुकरेहि सन्दावं।

मल्लिका। स्वगतं। णासक्कुणोमि पुणोपुणोवि वत्तुं का मा वीलाविअं ति अज्जोहा किंबि आअक्खिदुं हला!

तहवि कहम्मि कहइस्सं। प्रकाशम्। सहि! तस्स महा-आश्रयस्य स्तवप्रौढौ लज्जया वाग्वल्लरी विरमति।

नव। सकरचरणक्षेपमाविष्कृत्य। सहि! अलं पुणरुत्तेण सअणं कहिअं एव्व विदाहअर किरणमिलायन्तसिरीसद-लदअविब्भमेहिं अङ्गेहिं। सहि! साअरुण्णो क्खु जम्मो तस्स महाभावस्स जुव्वणस्स। जम्मिं तुमं लच्छिअ पुरकोसमे। वीक्खिअव्व किरणमालिणि। साणुराअं बन्धेसि।

मल्लिका। सनिश्वासम्। सहि! सोअणिज्जो क्खु सो अणुराओ जो णापरप्परस्स।

कालिन्दी। सहि मल्लिए! मा एव्वं भण सोवि सरि-साणुराअं कडुणव्वावुदेण भअवदा मम्महेण गोअरीकिओ आमोहाणम् विसिहाणं। वैक्लव्य। संस्कृतमाश्रित्य।

तस्यापि वाष्पकलमश्रि वपु विवर्णं
म्लानं मुखं परिसरे प्रियमित्रमिव।
किञ्च श्रिया तव गुणानभिशृण्वतश्च
प्रत्यक्षरं पुलकशालि कपोलमूलम्॥ (२)

मल्लिका। कालिन्दि! एआरिसा क्खु सहीजणस्स आ-सासणा विप्पलम्भा।

नव। अत्थ सो विप्पलम्भो। एदम्बि किअवलवसिअ

---

(२) तस्येति माहतस्य सात्त्विकोन्मेषादिवर्णन निरूपणेन मदन-बाणगोचरीभूततां प्रतिपादयन्ती मल्लिकां समाश्वासयति। तस्यापीति तस्यापि मारुतस्यापि इत्यर्थः। अपिशब्देन न केवलं त्वमेवेत्यर्थ प्रतीतिः कम्पित वाष्पकलमित्यादि योजनं क्रमेणैव।

पुढमदंसणविम्हश्राणंदवित्थारि उत्ताणतरं ततारतारोदरेहिं ईसि तिरच्छि जिम्हिणावश्वरीवण तरङ्गिअसम्भमेहिं ठलाय णेहिं णिव्हिमालिङ्गिश्र दुद्धसाश्ररतरलधवलमुद्धमहुरेण किरणसम्माणेण अङ्गमङ्गं मिलद्दाविश्राहि। सविनयम्। श्रहवा मरगअ भङ्गसिणिद्धसरीरस्स तस्स दंसणव्भसेण ण जाणिश्रो एव्व तक्कालअणिश्रो वुत्तन्तो जा तुमं भअवदीए मन्दाश्रणीए वन्दणादोवि वंमत्ता समुद्दाश्चरक्खलण श्रोदक्खाए मह करंगुलिवलणेण कहंवि अप्पाणं जाणावि श्रासि।

मल्लिका। सविलक्षस्मितम्। सहि! ठाणे उवालम्भेमि।

कालिन्दी। सहि! सव्वहा मादे अणासासणं होदु। णंतेण पुढमं अप्पासमप्पिओ पच्छा हारो।

नव। कालिन्दि! दाणक्कमेण पडिगहिअं पिअसहीए वि णं पुढमं महाभाओ हिअअं आरोविओ उवरिअ हारो।

मल्लिका। सहर्षं हृदयं विलोक्य। महाभाअ! अच्चेरं ते सअललोअचित्तवलामोडि हरण क्किवणस्स उआरत्तणं पि जेण तिभुवणेक्कमण्डणं अणग्घो अप्पा विदिण्णो ता मह हारो विअ अत्ताणं ण दंसेसि उक्कंठिआणं मह णअणाणं मो सोहे वअणं होज्ज।

नवमा। जनान्तिकं। कालिन्दि! एसा खु तवस्सिणी हिअअट्ठिअं सव्वं एव्व मण्णेइ कित्तिसंदाव।

मकरं। सहि कालिन्दिए! मणे किं णसामहदंसणं वहुमण्णेइ आदु ण वेत्ति वि इच्छंदी हिअअंचि अणि भुड्दत्ति।

मल्लिका । स्वगतं । जइ एव्वं उत्तम्मः तेणच्छुहा हारेण वरिकच्छिणिव्वाखु कुडुङ्गणी अच्छं महणजाणेवि किं तस्स अदंसणीत्थं (२) कुज्जङ्गिंग भग्ग वाउ णिव्विसेस अवत्थंम् । संस्कृतमाश्रित्य ।

आधिः कश्चन दारुणो वितनुते तद्दर्शनादद्य मां
मूर्च्छालं कलुषीकरोति करणग्रामं विमोहो महान् ।
धारावाहि तदेकगाहि किमपि ध्यानादयं तायते
किं वाचा हृदयस्थितेन तदिदं तेनैव विज्ञायते ॥

नवमा । जनान्तिकं । कालिन्दि ! पेच्छ रमणिज्जो भट्टिदारिआए अणुराअप्पआरो । संस्कृतमाश्रित्य ।

पातयति हृदयदेशे प्रियजनमभि पुनः पुनर्मुग्धा ।
वर्णितमदनातङ्का वाष्पवतीं भावमन्थरां दृष्टिम् ।

---

(२) कुक्कुराग्नि भङ्गवाघात् विभक्त तुषानलाभिवाघात् निर्विशेषां विशेष शून्यां सदृशीमित्यर्थः । अथवा शङ्कु सङ्कीर्ण मत्ताग्निभागघात-निर्विशेषामित्यर्थः । कुकूलं शङ्कु सङ्कीर्णे श्वभ्रे पुंसि तुषानले इति अन.र्थ रत्नमाला ।

आधिरिति । तद्दर्श[illegible] प्राक्तद्दर्शनात् जात इति शेषः । दारुणः कश्चन आधिः मनोव्यथा अद्य मां मूर्च्छालां मूर्च्छावतीं प्राक्तिस्था-द्यतोऽत्यन्यतरस्यामिति मूर्च्छाशब्दात् मत्वर्थे लच् प्रत्ययः । वितनुते महान् विमोहः दुःखानुचिन्तनोत्था विचित्तता विषयि ग्रामं इन्द्रियस-मूहं कलुषी करोति अज्ञानभ्रमाघात घूर्णनाऽदर्शनादिभिः क्षुब्धं कुरुते त्यर्थः । यदुक्तं मोहोविचित्तता भीति दुःखावेशानुचिन्तनैः तत्रा-ज्ञानभ्रमाघातघूर्णनादर्शनादय इति ।

स चासौ एकश्च तदेकः तं गाहते प्राप्नुते इति तदेकगाहि

मारुतेतरविज्ञस्त्वमित्यर्थः। धारावाहि सलिलासारवत् विच्छित्ति राहि-
त्येन एकाकार प्रवरणशीलं ज्ञानाद्वयं अद्वितीयज्ञानं कर्त्तृ एकमेव
ज्ञानमिति यावत्। किमपि अनिर्वचनीयत्वेन तायते विस्तृतं भवति।
तायृ सन्तानपालनयोरित्यनुदात्ते तो धातोः कर्त्तर्य्यात्मनेपदाल्लट्।
वाचा वचनेन किं प्रयोजनमित्यर्थः। अत्र कारणमाह तदिदं उक्तमर्थ-
जातमित्यर्थः। हृदयस्थितेन इदं साभिप्रायविशेषणं। तेन मारुतेन विज्ञाय
तथैव। अनवरत निज हृदयाधिष्ठितेन मारुतेन स्वाधिष्ठानदुरवस्थाया स्वतो
विज्ञायमानत्वात् स्वयमपि तत् प्रपञ्चने पिष्टपेषण न्यायेन प्रयोजनाभाव
इति भावः। अथवा किं वाचा कथनेन किं प्रयोजनं इत्यर्थः वक्तु-
मशक्यत्वादिति भावः। तर्हि तत् कथं बोध्यव्यमित्यत आह तदिदं हृदय
स्थितेन तेनैव विज्ञायते ईदृशं हृदयदौरवस्थ्यं हृदयवर्त्तित्वात्तेनैकेन
मारुतेन विना न केऽप्यन्येन बोधं शक्यमिति भावः। इह हृदयस्थितेन
तेन इत्युक्त्या मनसाहृतकान्तत्वमुक्तम्। तदेकगाहीत्यनेन आत्मारामत्वञ्च
विषयिग्रामं स्वयं अङ्गीकरोति इत्युक्त्या प्रयोजनान्तरपरित्यागश्च। इत्यञ्च
दृङ्मनःसङ्गसङ्कल्पजागराः कृशता रतिः ह्रीत्यागोन्मादमूर्च्छान्ता इत्य-
नङ्गदशा दशेत्युक्तासु दशसु अवस्थासु मनःसङ्गाख्यद्वितीया मदनावस्था
प्रतिपादिता विद्यानाथादयस्तु द्वादशधा स्मरावस्थेत्याहुः रतिरहस्यापर
नाम्नि शृङ्गार प्रबन्धप्रदीपे तु एकादशधा स्मरावस्थेति हरिहरः।
तत्तन्मते तु तत्तद्वचनानुसारेण कल्पनीयं मनःसङ्गावस्था लक्षणन्तु।
मनसाहृतकान्ताथ विहृत्यान्य प्रयोजनम्। आत्मारामा भवेत् यत्र चित्त
सङ्गरतिर्यथेति। न च मूर्च्छात्वादुन्मत्ता[illegible] तत्तन्नामक मदनावस्थावत्वं
शङ्क्यं तत्र प्रयोजनान्तर वैलक्षण्य सद्भावेऽपि तन्मते प्रतिपादितयोः मनो-
हृतकान्तत्वात्मारामत्वयोः अभावात् किन्तु मूर्च्छा मोहयोः परस्पर किञ्चि-
द्भेदभिन्नयोः गुणयोः मनःसङ्गावस्थायामीष्टवस्तु गुणकीर्त्तनादि जन्य-
त्वेनोपपत्ति सद्भावात्। यथोक्तं रत्नाकरे। वियोगायोगयोरिष्टगुणानां
कीर्त्तनात् स्मृतेः साक्षात्कारोऽथवा मूर्च्छा दशधा जायते यथेति। तथा
मूर्च्छा मोह शब्दयोः तत्तन्नामकावस्था वाचकत्वे मूर्च्छावस्था प्रतिपाद-
नानन्तरं ततोऽपि प्रथमाया मोहावस्थाया अत्र प्रतिपादितत्वेन

सविषादम् । का एत्थ पड़िवत्ती । एदाए उण धीरः पत्थ सक्खु उब्बसो एसो मअणावेसो ।

प्रकाशं । सहि ! णं एसो भावणा माहओ हिअअं भि णिट्ठइ ।

मल्लिका । सह ज्जो हलि! हत्थि! किं भावणा माहओ एव्व अहं खु मूढ़ा तक्केमि सच्चो एओत्ति । सनिश्वासं । अवि णाम दक्खिस्सं अअलङ्कहरिणङ्क सुन्दरं पुणोवि तस्स मुहविम्बम् ।

नव । सहि ! मा खु एव्वं काअरा होहि णं पड़िच्छन्द दंसणादि हिंसुलहं मणो विणोदणं उक्कण्ठिअस्स जणस्स ।

कालिन्दी । सच्चं मन्ते दि णोमालिआणं पियजणुक्कण्ठा तत्तिल्ल चित्ताणं तग्गुणवणणं तव्भुसणलाहो तप्पड़िच्छन्द दंसणं ति महन्तो आलम्बो ।

मल्लिका । कहं णाम लिहज्जदु करअलेपावआव उणो एसो पहाण माणस सङ्गसंवादिसुन्दरस्स तस्स पडिच्छंदो । अहवा जहसत्ति लिहिस्सं आणेहि चित्तसालादो सवणिअं चित्तफलअम् ।

नव । तह । इति उत्थातुमिच्छति ।

प्रविश्य प्रतिहारी ।

प्रतिहा । एसा दन्दकरण्डहत्था भअवदीए मन्दाइणीए विअ सिस्सा सारसिआ ।

---

पौर्वापर्य्य व्यतिक्रमदोषापत्तेश्च इत्यन्येऽपि विशेषाः सम्बगूह्याः विस्तर-भयात् विरम्यते ।

मल्लिका । कीस अविलम्बिअं ण पविसदि ।

निष्क्रान्ता प्रतिहारी ।

हला हञ्जा हि खणं चिट्‌ठ ।

ततः प्रविशति सारसिका ।

सार । सच्चं कहिअं भअवदीए मल्लिआ उत्तन्द्‌ वसणं चिन्तिअब्ब एदस्स दिब्बं वरस्स आअमणम् । अब्बो रक्ख सहत्थमअन्ति सुणिअ वेवन्ति मे अङ्गाइं । सकरुणम् । कहं ण दिट्‌ठो सीमन्तमणी जस्स फस्स मित्तेण तुज्झन्ताणं समालाहो होइत्ति उवदिट्‌ठं भअवदीए । पुरो विलोक्य सानन्दम् ।

एसा खु इह वइ आगच्छिआ अग्गदो वट्टइ मल्लिआ । निर्वर्ण्य । हुं माला पदे हाखरा अहि सित्तो सच्चं कहिअं भअवदीए । मल्लिआए आआरेहिं तुच्छिओ एव्व सर विआरोत्ति । संस्कृतमाश्रित्य ।

लुलितमधुरैः सेयं सद्यस्फुटद्दलकेतकी
कपिशधवलैर्वक्त्ये वाङ्गैः स्मराभिभवं नवम् ।
भवतु सफलः सर्गक्लेशो विधातुरनुत्तमः
समुचितवरप्राप्त्या रमन्तु च बान्धवाः । (४)

---

(४) लुलित मधुरैरिति । लुलित मधुरैः ग्लान मनोहरैरित्यर्थः । केतकीनां पुष्पाणि केतक्यः पुष्पमूलेषु बहुलमिति लुप् । केतकी तु श्वेतकेतकी स्वर्णकेतकी चेति द्विविधा तयोरत्र स्वर्णकेतक्याः विवक्षा श्वेतकेतकीत्वे सर्वथाऽप्यभाव्यकपिशवर्णस्य तत्कुसुमस्य केवलधवलत्वात् प्रस्तुत साधारणधर्मभूतकपिश धवलत्वैशिष्ट्याऽभावेन उपमानत्वविरोधापातः सद्य स्फुटन्ति तत्कालविकासीनि दलानि यासां ताश्च ताः केतक्यश्च ता इव

मल्लिका । स्वगतम् । हन्त दुल्लहजणाहिणिवेसिणी मह पच्चासा ।

सार । पुत्ता भग्गवईए आसीसाहिम् ।

इति लुप्तोपमा । कपिशधवलैः श्यावशुक्लैः स्वतः कपिशत्वं खर-पीड़या किञ्चित् पाण्डुत्वञ्चेति भावः । एवमुपमानपक्षेऽपि स्वतः कपिशत्वं सद्य स्फुटनात्मकोपाधिवशात् किञ्चित् पाण्डुत्वञ्च अतएव तत्र सद्यः स्फुटदुदलविशेषणम् । तेषां चिरस्फुटित दलत्वे केवलक-पिशत्वात् । अङ्कैः अवयवैः नवं खराभिभवं नूतन खरपीडां वक्त्रेव खराभि भवस्य चिरन्तनत्वे अङ्गानां केवल धावल्यसम्भवेन कपिश-त्वाभावप्रसङ्ग इति भावः । तथा च भगवत्युक्तं सत्यमिति भावः । एवं खरविकारस्य सत्यत्वोपलम्भे सति तत्प्रयोजनमाशास्ते भवत्विति समुचितोऽनुगुणो यो वरो माधवरूपो जामाता तस्य प्राप्त्या हेतुना विधातुः अनुत्तमोऽसदृशः अति महानिति यावत् सर्गक्लेशः मल्लिकासृष्टिविषयक प्रयासः सफलः सप्रयोजनो भवतु भूधातोराशीरर्थे लोट् । तथा च प्रयोजन प्राप्त्या श्लाघ्यो भवत्विति निष्कर्षः एयो जन प्राप्त्यभावे तु विधेरनायास सृष्टिभूतानां तृण पिपीलिकादिनि खिलवस्तुनामपि साफल्ये सति सौन्दर्यातिशय तर्कमाणाऽसदृश प्रयास प्रयोज्यस्य मल्लिका सर्गस्य वैफल्यापात इति महानियतकालोपार्ज्जित प्रतिष्ठासम्मार्जकः परीवादनवावतारोऽस्या भविष्यदिति भावः । किंवा स फलोभोगयुक्तः सुखरूप इति यावत् फलमिष्यते सस्ये पलके जाती-फले धने फाले । भोगे वीजे लाभे इति नानार्थरत्नमाला । एवञ्च वस्तुनि चिराभिलषिते इति पद्योक्त न्यायेन विधेः स्वकीय महाप्रयास प्रयोज्यमल्लिकासर्गानुगुणवरत्वेन चिराभिलषितस्य माधवरूपस्य वस्तुनः कथमपि भाग्यवशेन प्राप्त्या प्राङ् मल्लिकासर्गार्थं सम्भावित महाप्रया-सोऽपि सुखरूपतामेष्यत्विति भावः । च किञ्चेत्यर्थः । समुचितवरप्रा-प्त्येति काकाक्षिन्यायेन अत्राप्यन्वयः । बान्धवाः रमन्तु हृदयकुलीनत्वा-

मल्लिका । सानन्दम् । का ।

सारसि । णं तुमं एव्व ।

मल्लिका । एहि सारसिए किं णाआसि अदि ।

सारसि । एक्कसरिअं । तव्वत्ति एक्कवट्टइ भअवई दिवसिदं अ एदं अम्बर गव्भिणं तदन्तकरण्डअम् ।

इति मल्लिकाया हस्ते ददाति ।

मल्लिका । सबहुमानमादत्ते ।

नव । सहि ! कहिदं एदस्स आअमणं धाराधरंमि आअदाए पवालिआए भट्टिणो अमच्चस्स रअणवइणा सिम्हलदीवाणीअं वाहुडीकिअन्ति ।

सारसि । सच्चं एदं एव्व ।

मल्लिका । अज्ज कहिं वट्टइ भअवई ।

सारसि । अन्ते उरंमि देवीए सविहे अमच्चस्स मुहादो किंवि सुणन्ती वट्टइ ।

नवमा । मसे तं एव्व कोलीणं भट्टिदारिअं संवरओ राअमुहेण पत्थेदित्ति ।

मल्लिका । । सजुगुप्सं स्वगतम् । जं कइं मं अस्सो जणो पत्थेदि ।

सारसि । ता अणुमस्सेदु मं पिअसही ।

मल्लिका । सहि ! ण पारेमि वारिदुं भअवईए सविहं गच्छसित्ति । निष्क्रान्ता सारसिका ।

---

विशिष्टानुगुणवरलाभेन ऋध्यन्त्वित्यर्थः । बान्धवाः कुलमिच्छन्ति इति वचनादिति भावः ।

कथ्यता पिसुणो आआरो । (संस्कृतमाश्रित्य ।)

वर्णान्तरेण विसकाण्डसहोदरेण
स्पृष्टं शरीरमकठोरकरीरमुग्धम् ।
प्रश्नायतीव किमपि श्वसिता निलेन
बिम्बाधरोऽपि कुरु विन्ददलाभिरामः ।

सनिर्वेदम् । हन्त मूलंमि लूणो सच्चीवअण सलिल-सित्तो पच्चासालदांकुरो । धण्णा खु सा पुण्ण भाइणी जाए सो महाभाओ बालचन्दलापण्डुरे हिं अङ्गेहिं अक्खरं कहेइ । णिक्कलुषा असा जाइमसमिं ईरिसावत्थे उदासीणा होइ । मदनपीड़ां नाटयन्ती सखेदं निश्वस्य । मुद्ध हिअअ ! कीस अलसंकंत माणसे जणे पुणो पुणो णिवधसि माणह हणां मस्स अज्जवि निप्फलमणोरह विसम्ब-दम्म तुह कहिं ण गआ तारिसी लज्जा । अहवा मम्महो एव्व एत्थ भणिज्जो । जेण तुमं एव्वं तिक्खतिक्खे हिं वाणेहिं तस्मिं जणे दिढ़ं कीलिअं सि । आकाशे । भअवं अबलाजण दंसिअ भुअसुंडीर सार मम्मह भीरुओसि तुमं णअर घलादिग्वभुअदण्डमण्डणादो महाभाआदो जेण पलाअणत्त भीषणा मह हिअअं विप्पअन्ता वि तहिं चित्त अट्ठिए तुह रवलच्छी कुम्भीलेण तंमि जणेण ण णिवसवसती तुज्झ मग्गणा अवणि पडदिअ जेण काएवि अट्ठे मुद्ध महुर पण्डर गण्डमूलो लक्खिज्जइ एसो ।

इति वाष्पं निवर्तयति ।

कालिन्दी । सकरुणम् । जनान्तिकम् । अहो एदाए वेआदि सम्मो । संस्कृतमाश्रित्य ।

(५) चित्रदयितेऽपि तैस्तैराकारैरन्य सङ्ग शङ्किन्याः
अस्या रोष विषाद व्रीडोत्कण्ठा परिप्लुते नयने। ५

प्रकाशम्। सहि। जइ अवसिदं विअक्खिअं वअणं ता अहंवि किंवि भणिस्सम्।

मल्लिका। स्वगतम्। मण्णे एसा सिणेहमेत्तदंसिणी आसासणे पवट्टइ। प्रकाशम्। कालिन्दि! किंविअ।

कालिन्दी! अहं खु तक्केमि केणावि हत्थविसाणणेउणा घआसइदुकामेण णिअवुद्धि मेसकप्पिओ कोवि लिहिओ चुणक्खरणायेण उस महाभाआ किदीए संवादो जाओत्ति।

मल्लिका। ण सुट्ठु दिट्ठं तुए कावि महाभाअ दंसण परवस हिअआए णिओक्कण्ठाविणोदण साहण समाणुराअस्स तस्स पडिरूव्वं थणंसुए लिहिअन्ति भणिदव्वं ण एत्थ लोअणा अज्जवि दीसन्दि णअण पडिआवाह मोसालिया अञ्जणविन्दुणा।

कालिन्दी। सहि! णअभ्भट्टइ एदं कहिंणु दिव्वं

---

(५) चित्रदयितेऽपीति। चित्रदयितेऽपि आलेख्यात्मक नायकेऽपीत्यर्थः। ननु यथार्थनायके इत्यर्थः। शङ्काया अत्यन्ताऽविषये इति भावः तैस्तैः पाण्डुरगण्डमूलत्वादि लक्षणोपलक्षितैः आकारैः अन्यसङ्गशङ्किन्याः स्वैरनायिका सम्पर्कमाशङ्कमानायाः इत्यर्थः। अन्यस्याः सङ्ग इत्यत्र सर्वनाम्नोवृत्तिमात्रे इति अन्यशब्दस्य पुंवद्भावः। अस्याः नयने रोषविषादव्रीडोत्कण्ठापरिप्लुते अन्यसङ्ग शङ्कयारोषः किमत्र कर्त्तव्यमिति विषादः। ईदृगाशयस्फुटीभावे सख्याः पर्य्यनुयोगादिति व्रीडा। प्राणदयित इत्युत्कण्ठा। एताभिः परिप्लुते सम्भूते स्तः इति शेषः।

दूरे दंसणं होज्ज महाभाअस्स कापवि अविस पञ्चक्ख विरुद्धं अ एदं णं कअ्चविअ अतुए दिट्ठो ण उण तारिसो एव्वं विहु पलिहो । सस्मितम् । दाणिं होदु ।

मल्लिका । स्वगतम् । जुत्तिजुत्तम् । इमाइ एदाए वअणाइ हिअअं ईसिसुसा सहो णिहि । प्रकाशम् ।

कालिन्दि ! अत्थु आकिदि संवादो कहं दोवन्तरट्ठिएण चित्तसिप्पिणा एसोहार मज्झम्मि महिं इमच्चीविलसिओ ।

कालिन्दी । विहस्य । ण जुज्जइ अट्ठ जरई णाओ अट्ठसन्दइ अट्ठलेत्ति वेच्छ । संस्कृतमाश्रित्य ।

सत्कवीन्द्र मतिवत् यदृच्छया चित्रशिल्पिकरवर्णतूलिका ।
तत्तदुल्लिखितु मप्यलक्षितं वस्तुतत्त्वमखिलं प्रगल्भते ॥ ६ ॥

मल्लिका । सवितर्कम् । इत्थि सन्देह डोलाएहिं दोल-

---

(६) कथं द्वीपान्तरस्थितेन चित्रशिल्पिना एष हारमध्य महेन्द्रमणिविलिखित इति मल्लिकायाः शङ्कां दृष्टान्तमुखेन समुच्छिनत्ति ।

सत्कवीन्द्रेति । चित्रशिल्पिनः करे विद्यमाना वर्णा तूलिका लेखनी चित्रशिल्पकर वर्णा तूलिका कर्त्री सत्कवीन्द्रमतिवत् महाकविप्रज्ञेव अलक्षितं अदृष्टमपि तत्तत् स्वविवक्षितं अखिलं वस्तु कर्म तत्त्वं सत्वभूतं स्वस्वगुणाव्यवच्छिन्नमिति यावत् इति विधेय विशेषणं अथवा वस्तुतत्त्वमित्येकपदं वस्तुस्वरूपमित्यर्थः । तत्त्वं स्वरूपे परमात्मनि इति मेदिनी यदृच्छया प्रयत्नेन विना उल्लिखितं क्वचित् फलकादौ विन्यस्तं उल्लेखविषयीकर्तुं प्रगल्भते प्रभवति सत्कवीन्द्रमतेरिव चित्रशिल्पिकर वर्णतूलिकाया अपि अदृष्टचर वस्तुतत्त्वोल्लेखने अनायासनिपुणत्वेन तत्र तदीयशङ्काया अनवकाश इति भावः । पूर्णोपमालङ्कारः ।

इव हिअअं । सानन्दकम्पम् । जं होदि तं होदु तह सओ सुहुमलो अआइ मए दिट्ठिआ लद्धो तस्स पाडिच्छन्दो ।

नवमा । सव्वहा मा दे वंसओ होदु एसो क्खु सुमारे अणुबन्धि उवालद्धओ सअ वअणं काहुं विअ मिसेण कत्ताणं पआसेदि इमस्स तुज्झ अवस्स संभावणेण । ता मुणाल अवलोआरो विअ अवहरदि तुह हिअअ अक्खलो-भअम् । इति कस्तूरीवचरे संदेशयति ।

मल्लिका । सौत्सुक्य चारवर्षं वितर्कम् । स्वगतम् । किं नु खु एदम् । संस्कृतमाश्रित्य ।

अस्मिन् पेयुषि कुञ्जस्थल मुररीये
निर्बीजमङ्कुरति काचिदतुच्छलिमें ।
किञ्चास्य चिनइयितस्य क्रमेत्य सद्यं
सद्यं तदङ्ग परिरम्भमिव प्रहृष्टं ॥

नवमा । सहि ! सफ मंथरणिपफन्दलोअणा किं झाअसि ।

मल्लिका । हला एदस्स दंसणे चट्ठलद्धं विअ संजा-अपवभिअं विअ सअं एव्व किं वि किं वि उक्कुहइ हिअअं ।

नवमा । कालिन्दि ! अवि रं एदं जं सोवंदरट्ठिअस्स हिअअवरस्स आअमणं जं वि तस्स दंसणेण पत्तभिआ ।

कालिन्दी । किं एत्थ अचेरं जं जस्स पत्थ्इदं तस्स दूरट्ठिअंवि पस्सं आअच्छइ । वेच्छ । संस्कृतमाश्रित्य ।

अपि देशविप्रकृष्टान्यदृष्टमाशे हृं न विकृष्टानि

अकुल गोत्ताए सिणुल दोवा मदाए चित्तकखाए ईसवेव हुटडोविअ चावच्छिअदिट्ठो चिट्ठइ णाह माहवो। अह दूरे कुल गोत्ताइं अद्यामासत्ताएत्ति भविदव्वम्। वर्णिमर्यम्। एदइमेत्तम्मि विजयंमि काव्वख़ु इसिअत्तच्छी मुन्दे र विब्भमा तारिसो सव्वा होज्ज कण्णआ।

प्रकाशं। एसा भट्टिदारिआ।

भ्रमरकः। सानन्दम्। स्वगतम्। तुं अव्वा एसा कण्णआ वम्मह रामरमणिज्जल्ली महाभाग्रा जा चित्त गआ णाहेण मारएण णिप्फन्द मन्थर सिणिद्धधे हिं लोअणेहिं पुलोइज्जइ। अहो एव्व णुज्जइ ताए कुभट्ठललिइआ मालिआवि। सायंसम्। ताला ख़ु वंमहो वंमहो जाला तसि विअ एत्थवि जणे सुच्चइ अड्ढेवाखे। गाति समीपस्य एव पणमामि।

मल्लिका। स्वगतम्। तस्स परिअणन्ति मह्न्तोख़ु एदस्सिं वहुमाणो। पुण्णवन्ताख़ु एदे जे अलसी दलसामलं महाभागं सफलणिं माणेहिं दिट्ठीहिं णीसंकं सइचिअ वेक्खन्ति। जनान्तिकम्। कालिन्दि! उइअं ववहर।

कालिन्दी। भ्रमरअ! ईसि समीवे होहि।

भ्रमरकः। स्वगतम्। कहं णाम ह्वेअं वि अवगअं एदाहिम्। समीपमुपसर्पति।

प्रति। पहुहो विअ पडिहारंमि ता गच्छामि।

इति निष्क्रान्ता।

सख्यौ। जनान्तिकम्। उइअ वेदृणी ख़ु कण्णअआ।

भ्रमरकः । मल्लिकां निर्वर्ण्य । स्वगतम् । एदाए वि मर कंड पंजर मज्झमूल वकखाद मग्गणाविप्पणत्तवल्ली । पुनर्निर्वर्ण्य । एसा जइ वीअम्मि रग्रणसाणसिला एदाए कुसुमण्डलं मक्कोइ णाअम्मिस हारयट्ठी । हन्त ण केवलं हारयट्ठी णाह्मोवि माहवो उत्तरिज्ज वल्लवी वलम्बी इह चिम कीलइ ।

कालिन्दी । भमरम ! कीउण वावारी महाभाअस्स अवसथणामि काविवा अदे सवअणाइ तुह वअणं पाविस्साइ ।

भ्रमरकः । सुणीअदु अत्थि रअणवइणामहेएण संजत्ति अवरेण । (सांयात्रिक वरेण) अह्माणं महाराअस्स दिसं अवहं रअणम् । एक्कम्मिला आजणचिउरबन्ध सण्णिवेस जोग्गो अमुणि अग्घो सीमन्तमणी । अञ्च चिन्तगअं सअल लोअ लोअणसंवणणं लावणमअं किंवि कणआ रअणम् ।

मल्लिका । स्वगतम् । अह्महे ण संच्छादिओ पमादेण अणुंसुअगओ महाभाअं पडिच्छन्दी । व्याजेन संच्छादयति ।

सख्यौ । जनान्तिकम् । किं एसौ एव्व रअणवई ।

कालिन्दी । तदो तदो ।

भ्रमरकः । तदो भणिअं तेण सीअमाणिञ्च चित्तफलअं अण्णंवि किंवि हत्थकरणम्म गव्भगअं दिव्वं वरं सिंघलदीववरन्ते । (सिंहलद्वीपप्रान्ते) लंकादो उत्तरपुरुम दिसा भाए मणम्म सञ्चार सुखे जुणरणमज्भम्मि अवभं कस

सिहरम्स कमसवि वड्ढवलव्ध इट्ठट्ठले वाहाव वट्ठ पड्डिट्ठ विम्भं मम्मवइट्ठेहिं भङ्गेहिं दिट्ठन्ति।
सर्व्वा विस्मयं नाटयन्ति।

कालिन्दी। जनान्तिकम्। मन्ने तं एव्व एइं दिव्वं वरम्।

प्रकाशम्। तदो तदो।

भ्रमरकः। तदो अदृसिअदिव्वं वरो एव्व गहिदाहिअ पारितोसिओ जहेच्छं गओसो रअणवई।

सर्व्वाः। स्वगतम्। गओ संसओ।

कालिन्दी। तदोतदो।

भ्रमरकः। अह वअलेण भट्टिणा मह हत्थे पेसिअं तं रअण जलिअं दट्ठुण णाइमाबओ सहत्थेण गणिअ तं चित्तकलअं विद्धआणंदसिवभरेहिं णअणेहिं विअड पुंडरीअदल माला जालेहिंविअ अवअंदो संजाय पच्च- भिणो चिरंठिणो।

मल्लिका। सनिर्वेदं निश्वस्य। स्वगतं। हन्त मह जीविआर्ड वण मणोरह अज्ज दज्जो तुम्भ जलंजली। जनान्तिकम्। कालिन्दि! विसंवदिआ तुह उववत्तीओ।

कालिन्दी। जनान्तिकं। सहि! वअण वेसं असुणिअ कीसि तम्मसि। प्रकाशं। तदो तदो।

भ्रमरकः। तदोअ लं कलअं सव्वं मअन्तो णोमन्तवई तंमणिं करअलेण पुणो पुणो विहितवन्दो।

मल्लिका। जनान्तिकं। सुदं वअण वेसंवि।

नवमा। स्वगतं। भअवं मणाजुत्तं खिदं सुद्धिअर्ड

कुसुमकर्म्म अणं तस्सिं महामाए दिट्ठे लग्गहिअअं काए-
विअ तं उवा अव लि संकामिदि ।

कालिन्दी । स्वगतं । किं णु खु एदं । अहवा असं पुव्वं एव्व वअणं । प्रकाशं । अहो महंतो खु अणुराओ तस्सिं जणे महाभाअस्स । अह काए विअ तीए आकिदी ।

मल्लिका । साकूतं स्मयते । एदं हंसमअं सुणेमि काएवि तीए सरिसी णत्थित्ति ।

मल्लिका । सनिश्वासं । स्वगतं । अहो खु महाभाअस्स लोअणाणं अणुवहा (अनर्हा) । णाअम्हि ।

कालिन्दी । कीस एदहंसमअंति सासंकं विअ वअणं ।

भ्रमरकः । एताओ उण । इत्यर्धोक्ते । उद्दआणु इदं ण जाणीअदि जहं दिट्ठं भणामि ।

मल्लिका । निर्दिश्य । एमेअ वट्टइ ।

मल्लिका । सोच्छ्वासं । दिट्ठिआ वरिच्छवअं पि आरो विअम्हि ।

उभे । जनान्तिकं । सहि ! दिट्ठिआ वड्ढामो तुमं एव्व तहिं आलिहिदा ।

मल्लिका । कहं सारिच्छमेत्तेण अहन्ति भणीअदि ।

कालिन्दी । तुमं दट्ठुणा अणाए वडिदव्वं महाभाओ ण विच्छ इत्ति ।

मल्लिका । अहो सिणिहो ।

कालिन्दी । प्रकाशं । भमरअ ! किं एत्थ अणुहूअं णहि अम्हि सहि उच्चारिए जीवाढ़ज्जइ णं आकिदि सारिसं होइ ।

भ्रमरकः। ण णं वर सारिस्समेत्ति सव्वं तत्तहोदीए एव्व अज्ज णाहस्स हिआए मालिआए हं लिहिआ। सर्वे अपि हास्यं नाटयन्ति।

कालिन्दी। जनान्तिकं। सहि! किं अज्जवि सारिस्समेत्तिं।

मल्लिका। सानन्दं। सहि! कहं दीवन्तरे महपडिच्छन्दो।

कालिन्दी। जह महाभाअस्स। प्रकाशं। अच्चेरं एदं तदो तदो।

भ्रमरकः। तदोअ पियमित्तेण णाह कलअण्ठेण ण एसा सच्चेत्ति णिवारिए णिवुत्तो सीमन्त मणि णिवेस पआसादो महाभाआए एव्व जोग्गोत्ति अहं एदस्स दाणे आणत्तोम्हि। इति मणिमम्बराहुद्धृत्य कालिन्दी हस्ते समर्पयति।

कालिन्दी। भमरअ! परवई खु अम्हाणं पिअसही महाभाएण ता जह णिद्दिट्ठ करम्ह। इति मणिमादाय मल्लिकायाः प्रदर्शयन्ती। जनान्तिकं। संस्कृतमाश्रित्य।

तदिदं हाटक सूत्र स्यूतं सखि! पाटलं रत्नं।
प्रेषित मनुराग धरं मन इव स्मरेषुणा विद्धं॥ (७)॥

मल्लिका। सोत्कण्ठमालोकयति।

नेपथ्ये।

---

(७) तदिदमिति। हे सखि मल्लिके! स्मरेषुणा विद्धं अतएव अनुरागधरं त्वद्विषयकरागयुक्तं रक्तवर्णयुतञ्च मूर्त्तं शरीरविशिष्टं मनःचित्त मिव स्थितमित्युत्प्रेक्षा। हाटकस्य सूत्रेण स्यूतं पाटलं तदिदं रत्नं प्रेषित मित्यन्वयः।

एषा सम्प्रति चक्रवाक रमणी दृष्ट्या मिलद्वाष्पया
पश्यन्ती चरम क्ष्माधर तटी सीमन्त रत्नं रविं ॥
संप्राप्तेव भवान्तरं शिव शिव व्यामुह्यता चेतसा
पार्श्वस्थस्य न वेत्ति वल्लभ महो शापस्य दुर्लङ्घता ॥ (८)

सर्वे आकर्णयति ।

मल्लिका । स्वगतं । हन्त अहं विश्व तवस्मिणो चक्रवाईवि ।

पुनर्नेपथ्ये ।

त्यज चक्रवाकि ! शोकं वधान धैर्य्यं सहस्व समयममुं ।
अयमेव वासरमणि र्हरिष्यते शाप मूर्च्छान्ते । (९)

---

(८) एषेति । सम्प्रति एषा चक्रवाकरमणी चक्रवाकी स्त्रीलिङ्गात् मल्लिकेति च ध्वनिः । मिलद्वाष्पया दृष्ट्या चरमक्ष्माधरतट्याः सीमन्तरत्नं शिरोमणीभूतं शिरोमणिस्थ रविं पश्यन्ती सती अन्यत् जन्म संप्राप्तेवेत्युत्प्रेक्षा । शिव शिव इति खेदे व्यामुह्यता मोहं प्राप्नुवता विषयज्ञानपाटव शून्येनेति यावत् । चेतसा पार्श्वस्थस्य समीपवर्त्तिनमपि वल्लभं चक्रवाकं प्राणदयितं मास्तस्य न वेत्ति न जानाति शापस्य दुर्लङ्घता अहो अद्भुतमित्यर्थः । अत्र प्रस्तुतसन्ध्याकालिक चक्रवाकी वृत्तान्तवर्णनेन प्रस्तुत एव सीमन्तमणि दर्शनादि मल्लिकावृत्तान्तोद्योतित इति प्रस्तुताङ्कुरालङ्कारः । प्रस्तुतेन प्रस्तुतस्य द्योतने प्रस्तुताङ्कुर इति लक्षणात् ।

(९) त्यजेति । हे चक्रवाकि ! स्त्रीलिङ्गात् मल्लिकासम्बुद्धेश्च ध्वनिः शोकं त्यज धैर्य्यं वधान अमुं समयं सायङ्कालं वर्त्तमानकालस्य सहस्व । तत्र हेतुमाह । अयं विलोक्यमान एव वासरमणिः सूर्य्यः शिखामणिश्च ते शाप मूर्च्छां दयितक चिन्तताकृपाच्छपथात् जायमानं मोहविशेषमित्यर्थः । शपथाक्रोशयोः शाप इति नानार्थरत्नमाला ।

नव । भट्टिदारिए खु वन्दिणो भट्टिणो अमच्चस्स साअं सच्छंदं घोसयन्ति ॥

अमरक: । अणुमण्णंतु मं महाभाआओ । जाव णाह-स्स इमं वुत्तन्दं णिवेदेमि ॥

कालिन्दी । एदिणा संजमण मन्दीच णिग्गमिअ जह पेउर उर सद्देण जाणीअदि देवी पिअसहिं दट्ठुं आअच्छइ । इति निष्क्रामति ।

नवमा । अम्हे वि पच्चुग्गच्छह्म देविं ।

मल्लिका । स्वगतं । अज्जवि अणासंघं हिअअं ।

रविमाय । कहं खु हिव्वंदरे मह वद्धिच्छन्दोत्ति मानन्दं । सुट्ठु भणिअं कालिन्दीए जह महाभाअत्ति ।

अम । सहर्षं । स्वगतं अणुट्ठिओ णाहस्स आदेसो दिट्ठोअ [विआरेहिं पडिकव्व धारणे णअ] णाहे एदाए अणुराओ । वआसिओअ । (प्रकाशितस्व) णाहस्स भावो ।

मल्लिका । सहि ओ गच्छम्ह इति निष्क्रान्ता सर्वे ।

इति मल्लिका मारुते द्वितीयोऽङ्कः ॥

---

हरिष्यते अपनुदिष्यति । हृञ् हरणे इति धातोरात्मनेपदात् भवि-ष्यदर्थे लृट् । प्रस्तुताङ्कोऽलङ्कार । इति श्रीमन्मल्लिका-मारुतव्याख्याने द्वितीयोऽङ्कः ।

# अथ तृतीयोऽङ्कः ।

ततः प्रविशति मन्दाकिनी ।

मन्दाकिनी । अहो ऐदं पर्य्यमवदानुकूल्ये विधातुः ॥

तथाहि ।

अव्याजरम्यः सदृशोऽनुरागो
यन्मल्लिकामारुतयो र्विगाढः ।
यच्चानयोः सङ्गममाशु शंसन्
सोमस्य सीमन्त मणेश्च लाभः ॥

साम्रं ॥ दिव्याम्बरोत्तरीयं शिखामणिन्यासरुचिर सीमन्तं ।
पश्यन्तीव पुरस्या प्राच्यं जन्म स्मरामि वत्सायाः ॥

सहर्षं वितर्कं । एतयोः खलु ।

जन्मन्येव प्राक्तने लब्धदार्ढ्यः
प्राप्तो दीप्तिं दर्शनादस्य भूयः ।
मन्ये यावद्दुर्विभाव्य प्रतिष्ठो
माञ्जिष्ठोऽयं वत्सयो रागबन्धः ॥ (१) ॥

---

(१) जन्मनीति । प्राक्तने विद्याधरामात्यचक्रवर्त्ति विश्वावसु तनयात्व रूपे जन्मन्येव लब्धदार्ढ्यः प्राप्तस्थैर्य्यः। अद्य साम्प्रतिके चन्द्रवर्मामात्य विश्वावसुनन्दनात्मरूपे जन्मनीत्यर्थः । भूयो दर्शनात् पुनरवलोकनात् दीप्तिं प्रकाशं प्राप्तः दुर्विभाव्या इयतीति चिन्तनाऽनर्हा प्रतिष्ठास्थितिः गौरवं वा यस्य स तथोक्तः । अतिगम्भीर इत्यर्थः प्रतिष्ठा तु समाप्तौ गौरवेऽपि चेति नानार्थरत्नमाला । वत्सयोः मल्लिकामारुतयोः रागबन्धः माञ्जिष्ठः माञ्जिष्ठरागः इति मन्ये यावत् निश्चयेन जाने इत्यर्थः यावत् पुरा निपातयोर्लट् इति निश्चयार्थको यावदिति निपातः अत एव लट् च ।

तदुक्तं अनुरागतत्त्वविद्भिः ।

यूनोःस्थिरप्रकाशः स्थिराप्रकाशोऽस्थिरप्रकाशश्च ।
उत्तम मध्यम नीचा रागा माञ्जिष्ठ नील कौसुम्भाः ॥(२)

तदयं । वर्णितश्च कालिन्द्या मल्लिकायामदृना सङ्कः ।

लीना वल्ली भवन कुहरे पञ्जरस्था चकोरी
चञ्चुस्रस्तं शशिकरकणं वीक्ष्य मूर्च्छामुपेति ।
लीलारामात् पिक मुखरितात्ता भया सा बिभेति
स्वालापेभ्यश्चकितनयना यत्कुहू कोमलेभ्यः ॥ ३ ॥

---

(२)प्रकृतनायकयो रागबन्धो माञ्जिष्ठ इत्युक्तं तथात्वे प्रदोषः किं उत गुण इत्यतस्तस्य सहेतुकमुत्तमत्व प्रतिपादक मदृत् सम्वादमाह । तदुक्तमिति ॥ प्रामाण्य सिद्धये अनुराग तत्त्वविद्भिरिति स्थिरश्च प्रकाशश्च स्थिरप्रकाशः स्थिरश्च अप्रकाशश्च स्थिराप्रकाशः । अस्थिरश्च प्रकाशश्च अस्थिर प्रकाशः स चक्रमदित्थेते माञ्जिष्ठ नीलकौसुम्भाः रागाः अनुरागाः अयमर्थश्च यूनोः क्रमात् उत्तममध्यमनीचाः इत्यन्वयः । तथाच क्रमात् स्थिरप्रकाशत्व स्थिराऽप्रकाशत्वाऽस्थिरप्रकाशत्वरूपगुणवैशिष्ट्ये न क्रमादुत्तममध्यमनीचानां पटादिरञ्जकमाञ्जिष्ठनीलकौसुम्भरागाणामिव यूनोः परस्परनिष्ठानुरागाणाञ्च स्थिरप्रकाशत्वादिगुणवैशिष्ट्यक्रमेण उत्तमत्वादि कल्पना क्रमशालित्वा देतेषां तत्क्रमेण माञ्जिष्ठादि पदेन व्यवहारः । अतोऽत्र प्रस्तुतस्य स्थिरप्रकाशत्व गुणवैशिष्ट्ये न माञ्जिष्ठाख्यस्य रागस्य उत्तमत्वमिति भावः ॥

(३) इह मल्लिकया अनुभूयमानस्य मदनातङ्कस्य कालिन्दी व्याकर्णित प्रकारं निरूप्य तत्र अनङ्गतत्वाऽऽपादकयुक्तिभूतं तदातङ्कप्रकारविशेषं स्वयमाह । लीनेति ॥ वल्लीभवनकुहरे लीना सती पताकां वता स्वङ्गोपरितनपक्षाणां रन्ध्रात् कापिततकविवरात् चकोरीचञ्चोः सकाशात् स्रस्तं गलितं शशिकरकणं चन्द्रकिरणलेशं वीक्ष्य

यदस्या मल्लिकाया वरनिर्णये नाहं प्रमाणं। अपितु भगवती कात्यायन्येव इति। आत्मगतं। हन्त अम्बरक नयस्य कौटिल्य माशङ्क्य अनाश्वासं हृदयं।

प्रविश्य ससम्भ्रमा सारसिका।

सारसिका। भअवदि अणुट्ठिओ आदेसो वसन्त-वल्लआवे अदिमुत्तलआमण्डवम्मि पडिट्ठाविओ मए भमरपमेलसहाओ माहओ। कालिन्दीए वि तहिं आणि-अइ अणुमाहरणव्वलेण णोमालिआ दुईआ मल्लिआ।

मन्त्री। सानन्दं।

अस्तु भूयो दर्शनेन किमप्याश्वासनं वत्सयोः।
इमौ प्रकृत्या सुकुमारगात्रौ कथञ्चिदातङ्कममुं सहेते।
परस्पराङ्गव्यतिषङ्गहृद्यौ यन्माल्यहारौ प्रतिधारयेते॥ (४)

विलोक्य। वत्से! कुतो विभ्रान्तलोचना वेपमानाङ्गी ससम्भ्रमेव लक्ष्यसे।

---

लक्षणात् तथाच सर्वं सम्पूर्णं। दण्डापूपिकयाऽर्थान्तरा पत्तेरर्था-पत्तिरिति॥

(४)इमाविति। प्रकृत्या स्वभावतः नतु कृत्रिमत्वेन सुकुमारगात्रौ मृदु-शरीरौ अन्तःपातनहीनाविति भावः इदं साभिप्राय विशेषणं इमौ मल्लिका-माधवौ कथञ्चिदिति प्रयासेन अमुमातङ्कं परसन्तापं सहेते। तत्र युक्ति-माह अत यस्मात् कारणात् परस्पराङ्गयोर्व्यतिषङ्गेण संसर्गेण हृद्यौ सुन्दरौ माल्यहारौ कर्म्म प्रति धारयेते परस्परं धारयत इत्यर्थः। माल्यहार धारणं व्याजेन परस्परं धारयत इति यावत्। इष्ट धारणे

सारसिका। गिराणं दुरे क्खु महिम चरणपेक्खाए चंडिआए विक्कमो।

मन्दा। अतो न प्रलभत्य सुरेन्द्राणामपि माया महामाया।

सार। सच्चं एदं। अग्रतो विलोक्य। एदं सअल कालं वुद् सिणिद्ध तमाल सण्ड पिण्डिअंधआरं गोरीघरं।

मन्दा। वत्से! अत्र स्थित्वैव श्रोष्यामो दूरस्थितामामेव सुलभोऽयं वस्तुना विशेषः। नेपथ्ये।

मातर्नमोऽस्तु तुभ्यं प्रसीद कल्याणि देवि! शर्वाणि!
भूया वरं वरेण्यं वत्सायास्त्वत् प्रसादलब्धायाः॥ (७)

मन्दा। आकर्ण्य। तदिदं धीरप्रशान्तगम्भीरस्वरस्य विश्वावसोरनुनाथनं। (८) पुनर्नेपथ्ये। वत्स विश्वावसो! प्रार्थ्यतां शम्बरको मल्लिकाया वर इति।

---

कन्दुक क्रीडिताय दिशन्ती प्रयच्छन्ती यतो यच्छानां दानवानां शराटाश्च शङ्काश्च अनयश्च शार्ङ्गीः चापानि च शार्ङ्गः कार्मुकमात्रेऽपि विष्णोरपि शरासने इति मेदिनी॥ शिरस्काणि शिरस्त्राणि च विशिखाः बाणाश्च एभिः उद्दण्डं अत्युन्नतं यत् षण्डं समूहः तत्कर्म जिहीडिरे अभिबभूव॥ हिडि गत्यनादरयोरिति धातोरात्मनेपदात् कर्त्तरि परोक्षे लिट्॥ षण्डपद्मादि सङ्घाते इत्यभिधानात्। अचेतनवस्तुसमूह वाचिनः षण्डपदस्य अत्र प्रयोगमहिम्ना सचेतनमपि दानवसमूहं अचेतनवस्तु सङ्घातमिव अनादृतवतीति भावो द्योत्यते॥

(७) मातर्नमोऽस्तु तुभ्यमिति पद्ये। वरेण्यं श्रेष्ठं इत्यर्थः॥

(८) तदिदं धीरप्रशान्तगम्भीर स्वरस्य विश्वावसोरनुनाथनं इत्यत्र अनुनाथनं अभ्यर्थनमित्यर्थः॥

मन्दा। पुनराकर्ण्य। अथमियं तमाल वणुस्मृतौ(?)करभ घर्घरस्वरा प्राकाश्यवाणी। स्वरानुसारेण चक्षुः प्रेष्य। पश्य सारसिके! तमालस्कन्धे समालम्बः कोऽपि पुरुष इव।

सार। विलोक्य। भअवदि! सच्चं पुरुषो एव्व णील-पङ्काव कुण्ठिओ तमाल पल्लव पुंज णिव्विसेसो वेण्णइ (अस्पति)

मन्दा। अहो! ग्रन्थकस्या विनयः। यत् निपुण प्रतारणोत्सुकहृदयो विश्वावसुं वञ्चयितुं चेष्टते।

सार। अम्मो ज्ञण अंते उरं गदुअ सव्वं एदं पआ-सइस्सामो।

मन्दा। वत्से! मामेवं। कालिन्दीं विना न क्वापि प्रकाशनीयोऽयमर्थः।

सार। अह को एत्थ पडिआरो।

मन्दा। ननु वञ्चनस्य वञ्चनमेव प्रतिक्रिया॥

कुमन्त्रिणं कूटविधान चुञ्चुं (८)
कूटैः सुगूढ़ै रति सन्दधामि।

---

(८) कुमन्त्रिणमिति॥ कूटविधानचुञ्चुं मायानिर्माण चतुरं तेन वित्त इत्यादिना चुञ्चु प्रत्ययः॥ कूटोऽस्त्री निश्चले राशौ लोह-मुद्गर दम्भयोः मायाद्रि शृङ्गयोस्तुच्छे इति मेदिनी॥ कुमन्त्रिणं कुत्-सितगुह्यवादयाविनं शम्बरकं कर्म मन्त्रोवेद विशेषे स्यात् देवादीनाञ्च साधने। गुह्यवादेऽपि च पुमानिति मेदिनी। सुगूढैः कूटैःमायाभिः अति सन्दधामि वञ्चयामि इत्यर्थः॥ यत् यस्मात् हेतोः परवञ्चतानां वञ्चकानां

यत्कण्टकानां चरणेन तानां
निष्कासनं कण्टकतो लघीयः॥

सार। सच्चं जुज्जइ एदं।

मन्दा। सानुस्वरणं। मारुतस्य प्रियसखः कलकण्ठो विष्णु रातपुत्रीं रमयन्तीं कामयते॥

सार। अत्थि दुवेणंवि अणुराओ कहिअं मेहुअरिआए रच्छागअं। (रथ्यागतं) कलअण्ठं दट्ठुणा मइन्तो मअध संज रोविअ सहीए रमयन्ती एसि।

मन्दा। सा खल्वद्य सीमरसरसि सिसिण्णासु गतवती त्वं पुनरमुं आकाशवाणी वृत्तान्तं कालिन्द्याः कर्णे निवेद्य कलकण्ठमपि तत्तीरं संश्लेषय। अहमपि गौरीं दृष्ट्वा यावद्विश्वावसुमस्मात् भ्रमात् निवर्तयामि।

सार। तह। इत्युभे निष्क्रान्ते।

मिश्रविष्कम्भः।

ततः प्रविशति उद्यानस्थो मारुतो भ्रमरकश्च।

मारुतः। (१०) सत्यमिदं ताच्चिन्त्यात् ताद्रूप्यं नामेति तथाहि।

---

निष्कासनं बहिष्करणं कण्टकतः तृतीयार्थे तसिः कण्टकेन करणेनेत्यर्थः॥ लघीयः अतिलघु सुकरमिति यावत्॥

(१०)सत्यमिदमिति॥ ताच्चिन्त्यात् अपरिच्छिन्नैक विषयक ध्यानात् ताद्रूप्यं ध्येय वस्तु सारूप्यं इति अयं प्रकार इत्यर्थः। इति हेतौ प्रकाशने निदर्शने प्रकारे स्यात् इति मेदिनी। सत्यं नामेति स्मरणे। नाम कोपेऽभ्युपगमे विस्मये स्मरणेऽपि चेति मेदिनी॥ तथाच ताच्चिन्त्याद्-

(११) तदा मुग्धं वक्त्रं किसलयरुचः सोऽधरमणिः
विशाले ते नेत्रे स्तनभरनता सा तनुलता।
सलीलं तद्यातं जननयनसञ्जीवनसुधा
प्रिया सा सा सा सेत्यजनि हृदयं तन्मयमहो॥

---

ताद्रूप्यमिति वाक्यप्रतिपाद्यार्थस्य संप्रति स्वानुभवगोचरी भावात् अद्वैति सिद्धान्तभूतस्य श्रुतपूर्वस्य तस्य वाक्यस्य अदृष्टपूर्व गोवत्स पदार्थभूतगवय दर्शनात् श्रुतपूर्वस्य गोवत्सपदस्येव सत्यता सत्याभित्यवगन्तव्यम्॥ अद्वैतिराद्धान्तस्तु अथातो ब्रह्मजिज्ञासा तमेवं विदित्वाति मृत्युमेति। मयि सर्वात्मके भावे मत् सामीप्यं भजस्व। सैव सालोक्य सारूप्य सामीप्या मुक्तिरिष्यते। गुरूपदिष्टमार्गेण ध्यायन्मद्रूपमव्ययं। मत्सायुज्यं द्विजःसम्यक् भजेद् भ्रमरकीटवत्। ध्यानात् कैवल्य माप्नोति अनन्यचेताः सततं यो मां स्मरति नित्यशः। तस्याहं सुलभः पार्थ! नित्ययुक्तस्य योगिनः॥ इत्यादिभिरनेकप्रमाणैः अपरिच्छिन्न ब्रह्मध्यानेन ध्याता ध्येय सारूप्यमश्नुते यथाच लोके शाकिन्यादि पत्र शाक संयोगाद्धरितवर्णः कीटविशेषः कुलालनाम्ना शोषणचित्रा भ्रमरविशेषेण सुकल्पित सद्म विशेषसंस्थापितः सन् अभङ्गुर भ्रमर चिन्तनेन तत्सारूप्य भजते तथेति। विस्तरस्तु तन्मत प्रबन्धेषु द्रष्टव्यः। प्रतिपादितश्चैतदस्मदीयश्लोक रत्नमालायां भक्तिभावितस्तनोऽपि देव त्वं सद्रूपतां जनस्य नूनं सङ्क्रमको मयूरसारिणीन्द्राद्रीषधी विभावितो रवेर्या इति रवेः शुक्लस्य शाङ्कवः शङ्कुपातकर इवेत्युपमा एतत् प्रपञ्चस्तु रसवादस्वरूपेषु द्रष्टव्यः। यद्यप्यत्र प्रकरणेषु बहुवक्तव्यं विस्तरभयाद्विरम्यते॥

(११)ताश्चिन्तयामास ताद्रूप्यमिति वाक्यप्रतिपाद्यार्थस्य स्वानुभवगोचरी भाव प्रकारमाह॥ तदाहीति॥ मुग्धं वक्त्रं सौन्दर्यत्व विशिष्ट वक्त्र पद्मवाच्यं वस्तु इत्यर्थः। तत् पूर्वदृष्टं मल्लिका वक्त्रमित्यर्थः॥ नान्यदिति भावः। किसलय रुचोऽधरमणिः किसलय सदृश विशिष्टोऽधरमणिपदवाच्यः सः पूर्वं दृष्टो मल्लिकाधर मणिः नान्यइति भावः। एवमेव विशाले नेत्रे ते स्तनभरनता तनुलता सा सलीलं यातं तत् इत्यत्रा-

अर्थः स्पष्टः । जगताम् उज्जीवन सुधा प्रिया जगज्जीवन सञ्जीवन सुधात्व विशिष्ट प्रियामल्लिकाख्या । सा सा सा सा पूर्वदृष्टा मल्लिका ॥ इति एवं प्रकारेण तात्विन्यादिमनुकर्षः ॥ तात्विन्यात् तदेकध्यानात् हृदयं ध्यातृ तन्मयं ध्येयात्मकं मल्लिका स्वरूपमिति यावत् अजनि आसीदित्यर्थः ॥ सा सा सा सेति आदरातिशये उक्तिः ॥ उक्तञ्च भट्टो-जिना वद्धर्मेण प्रकृतौ यथेष्टमनेकधा प्रयोगो न्याय्य सिद्ध इति ॥ ननु अत्र स्वानुभव गोचरी भाव प्रकार प्रयुक्ते तन्मयमिति पदे स्वरूपार्थक मयट् प्रयोग सामर्थ्यात् सायुज्य मुक्तं भवति ईदृश स्वानुभव गोचरी भावस्य विषयस्तु सारूप्य पदवाच्योऽर्थः इति प्रागुपन्यस्तं। सारूप्यं नाम रूपमात्रेण परस्पर सादृश्यं सायुज्यं नाम ध्यातृ ध्येययोः परस्परं सम्पर्कित्वं। इति परस्परभेदसद्भावात् अनयोर्विषय विषयिणोः असाङ्कर्या पात इति चेत् उच्यते सारूप्यं नाम रूपतः परस्परमपृथक्त्वं सायुज्यं नाम परस्परमपृथक्त्वं एवमेव चतुर्विध मुक्ति वाचकपदैरपि ध्यातृ ध्येययोरभेद एवोच्यते अतो नैतेषां सायुज्य सारूप्यादीनां परस्पर भिन्नार्थकत्व कल्पना प्रयुक्तदोषकल्पनाया अनवकाशः। यतश्च सैव सालोक्य सारूप्य सामीप्या मुक्तिरिष्यते इत्यादीन्यनेक प्रमाणानि तथाच न मुक्ति-तारतम्यं सर्वासामपि तासां ध्यातृ ध्येययोरभेद सिद्धि रूपत्वात् । ननु भ्रमर कीट न्याये कीट भ्रमर भेदेन द्वित्व विशिष्टयोर्ध्यातृ ध्येययोः अभेदसिद्धिस्तु रूपमात्रेण नत्वेक पिण्डीभावेनच । अतोऽत्र अभेदसिद्धा-वपि भ्रमर पिण्डत्वेन पुनरपि द्वित्व प्रतीति रस्त्येव इति ध्यातृ ध्येयैक्य समर्थनाऽसमर्थोऽयं उपमानोपन्यास इति चेन्नैवं। इह उप-मान पक्षे तात्विन्य प्रयुक्त कीटत्व नाशोत्तर भ्रमरत्व प्राप्तिमात्रक धर्मविवक्षया तात्विन्य प्रयुक्ताऽविद्या नाशोत्तर ब्रह्मत्व प्राप्तिरूपोपमेय धर्मेण सह बिम्बप्रति बिम्बभावेन उपमानत्वोक्तिः । अप्रत्यक्षस्य पार-मार्थिक सत्ता सम्भविन्य उपमेय प्रकारोपन्यासस्य सत्यत्व बोधार्थं प्रकृते यथोपयोग धर्म विवक्षया व्यावहारिक सत्तायां भ्रमरकीटोप माने अति प्रसक्तमन्याय्यं नहि दृष्टान्ते सर्वसाम्यं इति न्यायात् भवेद्भ्रमरकीट-वदित्यादि वचनस्य प्रमाणत्वात् । किञ्च श्रुति प्रकृते एकमेवाऽद्वितीयं

परितो विलोक्य । अहो विस्मापकोऽस्य विरिञ्चस्य प्रपञ्च निर्माण प्रकारः ।

बिम्बाः कम्बुशिरःसु शीत महसां बिम्बोपलेनाङ्किताः ।
कुम्भा व्योमनि कुम्भिनां पुलिनसम्भाराश्च रम्भापगाः ॥
अम्भोजानि दले दले छुत विधूय तत समस्तं पुन-
स्सम्पा वलिषु तन्मयश्च भुवनं किं नाम विक्रीयते (१२)

---

अत्र इत्याद्यनेक प्रमाण विरोधाच्च इत्यद्वैति सिद्धान्तः । एतत् प्रपञ्चस्तु सर्वमिह प्रकरण भङ्गभिया विरमामः । केचित्तु आस्यं अति सुन्दरं तत् वक्त्रं पूर्वदृष्टं मल्लिका मुखं किसलय सदृशः सोऽधर मणिः पूर्वदृष्टोऽधर मणिः एवमवशिष्टमपि कल्पनीयं प्रियायकर्णस्य लिवार चारुश्रीः जननयन सञ्जीवनसुधा सकल जनानन्दकारिणी सा प्रिया२ सा प्रिया२ पूर्वदृष्टा मल्लिका२ पूर्वदृष्टा मल्लिका२ इति ताच्छिल्याद्यु इत्यादि पूर्ववत् इति योजयन्ति ।

अन्ये तु तद्वक्त्रं पूर्वदृष्टं मल्लिकाया वदनं आस्यं अति सुन्दरं सोऽधरमणिः पूर्वदृष्टोऽधरमणिः किसलयसदृशः । एवमेव शेषमपि योजनीयं । जननयन सञ्जीवन सुधा सा प्रिया पूर्वदृष्टा मल्लिका सा सा सा उपन्यस्त वक्त्र सौन्दर्यादि गुणविशिष्टा (लिवारश्रीः) इति ताच्छिल्यादित्यादि प्राग्वत् इति योजयन्ति । अपरे तु तद्वक्त्रं आस्यं आसएवं शेषमपि संयोज्यं जननयन सञ्जीवन सुधा सा प्रिया सा सा उपन्यस्त गुणविशिष्टा आस बभासे । अस गति दीप्त्या दानेष्वित्युभय पदिनो धातोः कर्त्तरि परस्मैपदाल्लिट् ॥ इति ताच्छिल्यादित्यादि प्राग्व दिति योजयन्ति एवमन्यत्र द्वैविध्येऽपि ताच्छिल्य प्रकारो भावस्य नानुपपत्तिः इत्यलं पल्लवितेन ॥

(१२) आकूतविशेषं मनसि निधाय तं विरिञ्च कृत प्रपञ्च निर्माण प्रकार विस्मापकतां वर्णनेन परिष्करोति । बिम्बा इति अन्वय स्फुट एव । तथाच बिम्बो फलाङ्कितत्वं चन्द्र बिम्बानां तथा शङ्खाग्र-

भ्रमरः । जनांतं । सो एक्को उम्माइख पारद्धो । प्रकाश्याह ! सारसिम्नावम्मणादो जाणीयति मज्झ मुलहं लस्स होइअ दंसणन्ति ।

मारुतः । सत्वा सहर्षं ।

मत्वागमं प्रियायाः सोऽहं मदनाकुलः समुच्छ्वसिमि
आलोक्य चन्द्रिकोदयमासंध्यामामुखे चकोर इव । (१३)

निपथ्य । (१४) तस्याः खलु तरलेक्षणायाः साग्रयमनुरागसत्वं तत्त्वतो निश्चेतु मभिलषामि । साशंसं ।

---

वर्त्तित्वं बिम्बीफलाद्भुत चन्द्र बिम्बानां तथा गगनवर्त्तित्वं कुम्भिकुम्भानां तथा कदलिकाम्र वर्त्तित्वं विकता पुञ्जानां तथा प्रतिदष्टतेन्दुत्व मम्भोजानां । तथा विद्युल्लताया वर्त्तित्वं सुपष्यस्य मिसिख-स्यापि । तथा ताडश तडिल्लता मधुरत्वं भुवनस्य । इत्येव सुपन्यस्त प्रकारे एकैकस्याप्यद्भुतत्वात् ; किं तदनाश्चर्यकर मित्याक्षेपः । अत्र बिम्बीफलपदेन अधरस्य शीत मन्हः पदेन सुखस्य कम्बु पदेन ग्रीवायाः कुम्भिकुम्भपदेन वक्षोजस्य व्योमपदेन मध्यस्य पुलिनसंभारपदेन जघन प्रदेशस्य रम्भापदेन ऊरोः अम्भोज पदेन पाणिपादस्य दलपदेन अङ्गुल्याः विधु पदेन नखरस्य ग्रन्थावलि पदेन अवलायाश्च संग्रहः इति । विषयं निगीर्य तस्य विषयित्वेनैव अध्यवसानात् रूपकातिशयोक्तिः । तथा ककार मकाराणां पौनःपुन्यात् छत्यनुप्रासः । एतयोश्च परस्पर नैरपेक्ष्यात् संसृष्टिः ।

(१३) मत्वेति ॥ मदनाकुलः सोऽहं प्रियाया मल्लिकाया आगमं मत्वा ज्ञात्वा श्यामा मुखे निशामुखे सायंकाले इत्यर्थः यामो वटे इत्या-रभ्य यमुनायां निशायामिति मेदिनी। चन्द्रिकोदयं आलोक्य आर्त्ती विरह पीड़ितचकोर इव समुच्छ्वसिमि जीवामि इत्यर्थः । उपमा-लङ्कारः ॥

(१४) तस्या इति ॥ अनुरागं सत्वं राग सद्भावमित्यर्थः ॥

मन्यमानस्य मम सर्वथा अनाश्वासमेव हृदयं। येन तवापि वचनमाश्वासं तर्कयामि।

भ्रम:। वक्रितं। मज्झे अज्ज अप्पणेच्च दट्ठूण अप्पण अणेसु वि आसासणं संकणिज्जं होज्ज।

मारुत:। सौत्सुक्यं। प्रियागमनं प्रतिपालयन् इह केन नयने विनोदयामि।

भ्रम:। एदं कीलंत वसंत पअवोम्म गलिअ लक्खारस रग पल्लव तंव पाअव णिउरंबं फन्दन्त मन्द गन्ध वहंदोलिअ महुर सोल्लवेली कुसुम परिमल चोलिर पुलं धओलि णिओलि अं वरं णवणव सह आर भङ्ग चव्वण गव्विअ कोइल पञ्चम हलं वोल हिंक्कु कणवारणं वसंत वणुज्जाणं पेक्खन्दस्स णाहस्स सुलहो मणविणोदो।

मारुत:। विहस्य। तदिदं दर्वीकरात् भीतस्य वल्मीके वासोपदेश:। मन्मथाद् भीतस्य तच्छिविर वासमादिशसि प्रश्य।

आरक्ता: पटमण्डपा: किसलयैरुल्लोचिता: पादपा:
भृङ्गालीकरवालिका परिकरा: सेना भटा वायव:।
तारा: काहल निस्वना: पिकरवा स्तम्भाहे डामरं
स्कन्धावार पदं विभोकपवनं नाम स्मरोर्वी भुज:।(१६)

(१६) उपवनस्य मान्मथशिविरत्वमेव साधयन्नाह। आरक्ता इति। किसलयै: उल्लोचिता: उल्लोचा: कृता: तत्करोति इति णअन्तात् कर्मणि क्त:॥ वितानायित किसलयवन्त इत्यर्थ:। अस्त्री वितानमुल्लोच इत्यभिधानं॥ पादपा:। आरक्ता: पटमण्डपा: ग्रीष्मपट स्थगिता अङ्गाली

सदयाहि शिविर मानीयतां द्वीपान्तर भूषणं प्रिया प्रति-च्छन्दः ।

भ्रम । जं आहो आणावेदित्ति । परिक्रम्य । आआधे उज्जा आदे वदाओ तुम्हे सहाआ आहृआ । इति निष्क्रान्तः ।

मारुतः । सार्थं । को नामास्याः प्रति नवं रूपामृत मास्वादयिष्यति सुकृती ॥

स जयति तरुण स्तरुणः सा च तपस्या तपस्यापि ।
ये न यया पक्ष्म मया पाणिर्ग्राहिष्यते चकोराक्ष्याः ॥ (१७)

---

भ्रमरपङ्क्तिः करवालिका परिकरः अभिलता सङ्गः वायवोऽनिलाः सेना भटाः सैनिकाः । भवेत् परिकरः सङ्गे इति मेदिनी । तथा पिकरवाः तारा: अत्युच्चाः । काहलनिस्वनाः । तत् तस्मात् पटमण्डपादि सामग्री सद्भावादित्यर्थः ॥ उपवनं आरामं कर्म विभोः स्मरोऽपि भुजः डामरं विपुलं स्कन्धावार पदं सेना सन्निवेश स्थानम् शिविरमिति यावत् । स्कन्धावारः स्यात् कटकः शिविरं बलसंस्थिति इत्यमरः शेषः ॥ मन्ये नामेत्यभ्युपगमे । नामकोपेऽभ्युपगमे इति मेदिनी । अत्र पटमण्डपादि शिविर चिह्न सद्भावात् हेतोः उपवनं पक्षीकृत्य स्मर मण्डपाल स्कन्धावार पदत्वं साध्यत इत्यनुमानालङ्कारः ॥ पादपाः पटमण्डपाः भृङ्गाली करवालिका परिकरः वायवः सेनाभटाः पिकरवाः काहल-निस्वनाः इत्यत्र व्यस्तरूपकं ॥ एतस्यानुमानस्योत्थापकत्वेनाङ्गं इत्यनयोः परस्परमङ्गाङ्गि भावेन सङ्करः । इदञ्च रूपकोत्थितमिति तर्कानुमान विलक्षणं ।

(१७)स इति ॥ स मल्लिका पाणिग्राही तरुणः युवा तरुणः तरुणपद-वाच्यः उत्कृष्ट तरुण इति यावत् जयति । सा मल्लिका पाणिग्रहण प्रयोजिका तपस्यापि तपस्या च तपस्या शब्दवाच्या उत्कृष्ट तपस्येति यावत् ॥ चकारात् जयतीत्यनुकर्षः ॥ लोकेहि । तरुणत्वं नाम पाणि-

निम्नस्य। मम पुनरयं दुर्निवार प्ररोहस्य मनोरथद्रुमस्य मन्दाकिनी वर्षास्य पवनी भवन्ति। अपिच।

निश्चिन्वानाः परम सुलभान्तान्तु निर्याति कण्ठात्।
भूयो भूयः प्रसभ मसवो यत् प्रतिष्ठा समानाः।

---

पङ्कजयोन्यो दया विशेषः तस्याश्च फलं पाणिग्रहः। तस्य च उत्तम नायिका सम्बन्धित्वे उत्कृष्टत्वं इत्यतः प्रकृते च उत्तमोत्तम नायिकायाः पाणिपङ्कजयोत्तम फलविशिष्टत्व एव सप्रयोजन तद्यपदवाच्यत्वेन उत्कृष्टत्वं। अन्यथात्वेऽस्मिन् तद्यपदप्रयोगो डित्यादि पदप्रयोग वदिति भावः। तथा दुर्लभफलप्रति प्रयोजकं कर्म तपस्या तस्यास्तत् मल्लिका पाणिपङ्कजपदुर्लभफलप्राप्ति प्रयोजकत्व एव तपस्या पदवाच्यत्वे नोत्कृष्टत्वं। अन्यथात्वे तदनुष्ठानस्य वैफल्यात् तत्र तपस्या पदप्रयोगो सुष्ठेवेति भावः। येन तद्योन कर्त्रा पल्लिवया परिपक्वया यया तपस्यया प्रयोजिकया चकोराक्ष्याः लोकोत्तर नायिकात्वद्योतकमिदं पदं। पाणिः कर्म पाणिग्राते पङ्कधातो रुपादानार्थकात् भविष्यदर्थे लृट्। अत्र उत्कर्षार्थक तात्पर्य्य भेदेन शब्दार्थ पौनरुक्त्यालाटानु प्रास नामा शब्दालङ्कारः। लक्षणन्तु शब्दार्थयोः पौनरुक्त्यं यत्र तात्पर्य्य भेदवत्। स काव्यतात् पर्य्यविदां लाटानु प्रास इष्यते इति विद्यानाथः॥ उज्ज्वलोद्भटेन। स्वरूपार्थ विशेषेऽपि पुनरुक्तिः फलान्तरात्। शब्दानां प्रकृतीनां वा लाटानु प्रास इष्यते इति। ननु अनन्वयेऽपि शब्दार्थ पौनरुक्त्य सम्भवात् लाटानुप्रासत्वं किं नेष्यते। सत्यं यद्यपि युद्धेऽर्जुनोऽर्जुन इत्यादौ अनन्वये यथपौनरुक्त्यमात्रं लक्षणं। तथापि निर्देश प्रति निर्देशयोरेकरूप्या भावे पयसि प्रक्रम दोषप्रसङ्गात् आनुषङ्गिकं शब्द पौनरुक्त्यं। अत्र तूभय, पौनरुक्त्य, मध्यावश्यक मेवेति विषय-भेदान्न कोऽपि विरोधः तदुक्तं अनन्वये च शब्दैक्य मौचित्यादानुषङ्गिकं अस्मिंस्तु लाटानुप्रासे साक्षादेव प्रयोजकमिति। इति मल्लिनाथ सूरि सूनु कुमार स्वामि लोमपीथी।

मुख्यो हेतुः पुनरिह तया मुग्धगात्र्या प्रयान्त्या ।
मुक्ता ये ते वलित वदनं साभिलाषाः कटाक्षाः । (१८)

नेपथ्ये । हद्धी हद्धी भट्टिदारिआ ।

मारुतः । विलोक्य । सानन्दं । प्राप्तै वात्र कालिन्दी इव-मालिकाभ्यां मन्नयन चकोर चन्द्रिका मल्लिका ।

निर्वर्ण्य सदयं ।

इन्तेयं मृदित मृणाल निःसहाङ्गी
खिन्दाना जघन भरेण दुर्व्वहेण ।

---

(१८) निर्विन्नामाः परमसुलभामिति प्रतिज्ञया कार्य्य निर्वाह सामर्थ्येन गर्वेण वा असमानाः निरुपमाः अति चतुराः अत्युन्नता इति वार्थः ॥ प्रतिज्ञातु समाप्तौ गौरवेऽपि च कार्य्य निर्वाह सामर्थ्ये इति नानार्थरत्नमाला । अतएव प्राणाः तां मल्लिकां परं असुलभां केवलदुर्लभां निश्चन्वानाः निश्चयं कुर्व्वाणाः सन्तः भूयो भूयः पुनःपुनः प्रसभं कष्ठात् नियान्ति निर्गच्छन्ति इति यत् तु इह अस्मिन् विषये उक्तप्रकारेण प्राणनिर्याण विषये इत्यर्थः यत् प्रतिज्ञा समानाः इत्येक पदत्वे तु । यथा मल्लिकया प्रतिज्ञया स्थित्या समानाः तुल्याः मल्लिका सहवासिन इत्यर्थः । हृदयवर्तित्वादिति भावः । अतएव तां परं असुलभां निश्चिन्वानाः सन्तः भूयो भूयः प्रसभं कष्ठात् नियान्ति तु किन्तु इत्यर्थः । तु पादपूरणे इत्यादिना पचान्तरे नियोगे चेति मेदिनी । इह प्राणानां सार्वदिक् तद्ध्यानोपलक्षितत्वात्तद् दौर्लभ्य निश्चयेन कण्ठाद्बहि-र्निष्क्रमणमित्यत्र त्वर्थः । मुख्यो हेतुः पुनःप्रयान्त्या तया मुग्धगात्र्या वलितवदनं साचीकृतमुखं यथा तथा मुक्ताः गमनसमये साचीभूत त्रिभागमुखी सखीमिति पद्योक्तप्रकारेण प्रेरिता इत्यर्थः । साभि-लाषाः एते प्रतिभा वशात् साचाल्लालसमानाः कटाक्षाः तारका गतागति विश्रान्ति वैचित्र्य विवर्तनानि इत्यर्थः । अद्यापि उक्तगुणविशिष्टानां

आयाति स्तनभर भङ्गुरावलग्ना
पादाभ्यां प्रति नवपल्लवारुणाभ्यां ॥

आनन्दातिशयं नाटयन् ॥

स्मरस्याग्नेयास्त्रैः प्रतिहतमियन्तं हि समयं
यदासीदस्तोक व्यसन परितापातिविधुरं ॥
तदस्याः सान्निध्ये शिव शिव कुतोऽपि प्रसृतया:
सुधाधी रण्या व प्लुतमिव मनोहृष्टुं ल मह्यो ॥ (१८)

यावदहं लता गुल्मान्तरितो विस्रब्ध मेनां पश्यामि । इति तथा करोति ॥

ततः प्रविशति मल्लिका नवमालिका कालिन्दी च ।

मल्लिका । स्वगतं । अज्जवि अणासंघं हिअ अं । सविस्मयं । कहं णु दीवां दरे मह पडिच्छन्दो सुट्ठु कहिअं कालिन्दीए जह महाभाअस्स त्ति ॥

सख्यौ । हृदो हृदो ।

---

कटाक्षाणां स्वानुभव गोचरत्वेन संनिहितत्वात् सर्वदाप्यभङ्गुर नायिका स्वतयः प्रायाः तद्विरहमसहमाना बलात् पुनः पुनः कण्ठाश्लिष्यक्रामन्तीति भावः । ये ते इति यच्छब्द तच्छब्दाभ्यां पाठे तु ये कटाक्षा वलितवदनं सक्ताः ते इत्यन्वयः ॥

(१८)स्मरस्येति ॥ मम्मनः कर्तृ स्मरस्याग्नेयास्त्रैः इयन्त समयं प्रतिहतं सत् । अत्र प्रतिहतमिति कर्मणि क्त प्रत्ययस्य भूतार्थकतया फलप्राप्ति द्योतकत्वेन अपवर्गे तृतीयेति समयपदस्य यद्यपि तृतीया युक्ता तथापि क्त प्रत्ययवाच्य भूतकालस्य समयविशेषणेन इयन्तमिति पदेन वर्तमानासन्नत्व द्योतनात् स्तव वर्तमान सामीप्ये वर्तमानवद्वेत्यनेन पाक्षिको भूतार्थक क्त प्रत्यय प्रयोगः । तथाच क्त प्रत्ययस्य भूतार्थकत्व

मारुतः। निर्वर्ण्य। सम्प्रत्यतिशयालु सौन्दर्य्यं मस्या वपुरावेदयति अतिक्रान्त मर्यादं मनङ्गविकारं। तथाहि

विषया विधुरा दृष्टिः क्षामानिला ग्लपिता धरा।
तनुरपि भृशं म्लाना लूनेव पल्लव मञ्जरी॥

अपि च। लवली पाकोद्भेदाभि राम वदावद
स्फुरति कुचयोर्मूले गण्डे च काञ्चन पाण्डिमा॥

मल्लिका। कालिन्दि! सोक्खु एसो पच्च मादंसिष थ वणोदसिद्दर लदामण्डलो पदेसो जो तुए पुणो मुणा वण्णिदो।

मारुतः।

अयि पिवत ममृत मधुरानालापानसित कमल नयनायाः।
क्रूर कुहुमुख कूजित नाराचोद्वेजितौ कर्णौ॥ (२०)

कालिन्दी। स्वगतं। मण्णे एत्थ कहं वि लदाणिउञ्ज- आलीणो मारुओ होज्ज। प्रकाशं। सच्चं सो एव्व पौचम हु

---

प्रयुक्त फलप्राप्ति पूर्वकत्याग द्योतकत्वाऽभावात् कालाध्वनो रत्यन्त संयोगे इत्यनेन द्वितीया। बाध्यमान सत् इत्यर्थः अशोक व्यसनेन यः परि- तापः तेनाति विधुरं अत्यन्तक्लिष्टयुक्तं आसीत्। वर्तमान सामीप्ये इत्य- नेन अयमपि पाक्षिकः प्रयोगः। विधुरौ कष्टविश्लिष्टाविति नानार्थ रत्नमाला। तन्मनः अस्याः सान्निध्ये सति कुतोऽपि अविदित प्रदेशात् प्रहृतया सुधाधोरण्याव प्लुतं अभिषिक्तमिवेत्युत्प्रेक्षा हृष्टं सुखित- मित्यर्थः॥ कामुकमिति यावत्। हृषेरलुच इत्युलुच प्रत्ययः। हृष्टो मृगकामिनोरिति अभिधानम्।

(२०) अयीति॥ क्रूराणि यानि कुहुमुखानां कोकिलानां काकपुष्टः कुहुमुख इति अमर शेषः। कुजितान्येव नाराचाः॥ तैरुद्वेजितौ क्लेशितौ अयि कर्णाविति सम्बोधनं॥

मदकल महुअरणि उरुंव झंकार संलावो मन्दपवण चलिए ण किसलय हत्थेण अक्कार इअं तुमं।

मल्लिका। ता एत्थ अपचिं पिम्ह कुसुमाइं।

सर्व्वाः पुष्पापचयं नाटयन्ति।

मारुतः। यस्त्विहं मल्लिकां निर्वर्ण्य। एषा खलु।

उत्तानीकृतवक्त्र बिम्बमुपरि च्योतत्पराग्गोत्कर
वस्ता कूणित लोचनं स्तन भरोद्दाय स्त मध्याङ्कुरं।
ईषद्दर्शितनाभितुङ्ग जघन क्रान्तोरु पादाङ्गुलि
व्यासक्तस्थिति लीलयाऽपचिनुते पुष्पं नु चित्तं नु मे?(२१)

मल्लिका। हन्त! कीस मे अवचिमाइं वि हत्थेणोलम्गन्ति कुसुमाइं।

नवमा। सहि असहिअग्गाहिणं अवइ असुक्का पिअकुसुमाखु एसा वल्ली॥

मारुतः। हन्त निजावयव शोभा भ्रमरेरैव भ्रास्यति मल्लिका। तथाहि।

शोणिम्ना करपल्लवस्य रचयन्त्युल्लासिनः पल्लवान्।
स्वच्छाभि र्नखकान्तिभि र्विदधती स्मेरां प्रसूनावलिं।
तन्वाना तरलैरपाङ्ग वलनैः सञ्चारिणः षट्पदान्।
मुग्धा पूर्वं समुज्झितामपि पुनर्वल्लीं समालम्बते॥

---

(२१) उत्तानीकृतेति। पुष्पं अपचिनुते नु मे चित्तं अपचिनुते नु इति सन्देहः॥ उत्तानीकृत वक्त्र बिम्बत्वादि धर्म्माणां उभयत्र साधेऽत्वात्। अत्र उत्तानीकृत वक्त्रबिम्बमित्यादिना। क्रिया स्वभाववर्णनात् स्वभावोक्तिरेतदन्त प्राणितश्च सन्देह इत्यनयो रङ्गाङ्गि भावेन सङ्करः॥

मल्लिका। सलज्जं परिक्रम्य। लतान्तरमवलम्ब्य सलज्जम्।
अम्हहे एदिंखु झत्ति उप्पड़िया झंकार मुहरा बोलन्ति
महवअणम्मि टुल्ललिआ चञ्चलिआ।

मारुत:। विलोक्य।

इयमधिक लोभनीया बाला चलहार लुलित कुचकलशा।
मुखकमल सौरभ वलमधुकर सम्भ्रम विलोला॥

नवमालिका। सहि! विहसिद पारिआअ कुसुम सोरभ
गव्वेण तुह णिस्सास परिमलेण आअड्ढिआ विसज्जिअ
सहआर चम्पअ मालई पुण्णाअमुहाणं पुप्फाइं भमन्ति
अहिमुहं भमर गणा ता संच्छादेहि करअलेण मुहं वुअं।

मल्लिका। तथा करोति।

मारुत:। हन्त।

चकितवालकुरङ्ग विलोचना करतलेन समावृणुते मुखं।
तदपि पङ्कजमाकलयन्नयं भ्रमति भृङ्गगणो धृतझङ्कृय:

मल्लिका। णिवारेह णिवारेह पुणोवि ण मुञ्चन्ति
महुअर हदआ।

नव। सहि! मामा भीरुआ होहि एसा अहं णिवा-
रेमि। इति मल्लिका मालिङ्ग्य पदान्तरं नयति।

मल्लिका। चक्षुरुन्मील्य। दिट्ठिआ कहं विणिग्गअम्हि
भिङ्गसंकडादो।

कालिन्दी। सहि! कोमलङ्गि मल्लिए! दिढंखु किल-
न्तासि कुसुमावअअं संभमेण। ता का ए वि वल्लिए सोम्म-
लच्छा आसियिह मूलदेसे खणं उव विसह्म

मारुत:। सत्यमियं क्लान्तेव। कुत:।

निश्वासोद्गम मुद्वहन् कथयतः प्रस्पन्दमानौ स्तनौ ।
ऊर्व्वी वेपथु कुर्व्वते वचिरयौवत्कम्पिना वाससा
प्रत्यचैव ननु श्रमाम्बुकणिका नेत्राम्बुजोल्लासिनी
व्यक्ताः पाणितलेऽपि पल्लव सखे लाक्षां विना रक्तिमा ॥

मल्लिका । वन्देहं चाञ्चलिबन्धम् । अम्ब ! पणमामि ।

मारुतः । सबहुमानं ।

अपि पारिजात लतिका मधिशेषे हन्त वल्लि यस्यास्ते ।
जननयनभृङ्गसेव्या कलिका लावण्य मधुमयी सेयं ॥ (२२)

---

(२२) अपीति । हे वल्लि ! अयि लतिके ! जननयन भृङ्गसेव्ये जननयनैः भृङ्गैश्च सेव्ये प्रार्थनीये इत्यर्थः । इयं साभिप्राया सम्बुद्धिः अद्य इति शेषः ॥ पारिजात लतिकामपि अतिशेषे । अतिक्रम्य वर्त्तसे । ततोऽप्यधिकासीति भावः । जननयन भृङ्ग सेव्ये इति सम्बुद्धि सामर्थ्यात् पारिजातलतिका भृङ्गमात्र सेव्या । त्वन्तु जननयन भृङ्गोभय सेव्यासी-त्यस्माद्धेतोरिति भावः ॥ उभय सेव्यत्वे हेतुमाह । यस्यास्ते लावण्यं शोभा विशेषः मधुमकरन्दश्च एतदुभय मयी एतदुभय प्रचुरा सा अञ्जलि रूपा इयं निर्दिश्य मानत्वद्दृष्टि वस्तु विशेषरूपा (निर्दिश्य मानं वस्तु च सुकुलमेव) कलिका जातावेक वचनं अस्तीति शेषः । पारिजातलतिकाया भृङ्गमात्र सेव्यत्वे मधुमय कलिकामात्रवत्त्वं हेतुः । तव तु जननयन भृङ्गोभय सेव्यत्वे लावण्यमय मधुमय कलिका शालित्वं हेतुरिति भावः । तथाच त्वया मधुमय कलिका शालित्वप्रयुक्त भृङ्ग सेव्यत्व रूप साधर्म्येण पारिजातलतिकायास्तुल्यत्व सद्भावेऽपि लोके उत्कृष्टत्वेन प्रसिद्धया तयापि दुर्लभो लावण्यमय मल्लिकाञ्जलि रूप कलिका शालित्व प्रयुक्त जननयन भृङ्ग सेव्यत्व रूपो धर्म्म विशेषस्त्वया सम्प्रति समासादित इत्यतः पारिजात लतिकातोऽप्यधिकासीति भावः ॥ अथवा हे वल्लि ! अयि लतिके यस्यास्ते कलिका लावण्य मधुमयी लावण्यं शोभा विशेषः

नव । भट्टिदारिए ! एसा क्खु इरविहसिअ कुसुमत्थवअ णीसन्दि मअरन्दत्थलेहिं अंकोवसप्पिणिं तुमं दट्ठूण पञ्चु-हत्थणीविअ लक्खिअइ । ता एदाए मूलम्मि चिट्ठम्ह । सर्वा उपविशन्ति ।

मारुतः । सौत्सुक्यं ।

परिपाण्डु मनोहराङ्गवल्लीकथितानङ्गरुजो मतभ्रुवोऽस्याः
अनुरागनिबन्धनस्य बोधे त्वरते मे हृदयं विलम्बते च ।(२२)

---

मधुमकरन्दयोः एतस्यां क्रमादेतत् प्रचुरा अञ्जलिरूपत्वेन स्वार्थस्य प्रचुरा अग्रफुल्लकुसुमरूपत्वेन मकरन्द प्रचुरा चेत्यर्थः । अतएव जन-नयन भृङ्ग सेव्ये जननयनैः भृङ्गैश्च सेव्ये क्रमात् एतदुभयैः स्पृहणीये इत्यर्थः । सेयं इत्थं कलिका वत्त्वेन एतदुभय सेव्या त्वं । अद्येति शेषः पारिजात लतिकामपि । अपि शब्दात् कल्पद्रुमाणामिव पारिजाते इत्यादिना उत्कृष्टत्वेन लोकप्रसिद्धामपीत्यर्थः । अतिशेषे अतिक्रम्य वर्त्तसे । हन्तेति सम्प्रत्ये हन्त वाक्यारम्भ खेद विषाद हर्ष सम्भ्रमे इति मेदिनी । तथाच पारिजात लतिका तु मधुमय कलिकामात्र शालि-त्वेन भृङ्गमात्र सेव्या । त्वं पुनर्लोचनाप्रमय मल्लिकाञ्जलिरूप कलिका शालित्वेन मधुमय कलिका शालित्वेन च क्रमाज्जननयन भृङ्गै तदुभय सेव्यासीत्यतः पारिजातलतिकातोऽप्यधिकासीति भावः ॥

(२२) परिपाण्डु मनोहरेति ॥ निबध्यते अनेनेति निबन्धनं बन्धक-मित्यर्थः । अनुरागस्य निबन्धनं अनुरागनिबन्धनं रामकारणवस्त्वि-त्यर्थः । तस्य बोधे अनुराग गोचर वस्तु ज्ञानविषये इति यावत् । त्वरते काल शैघ्र्यमाकाङ्क्षते विलम्बते च कालविलम्बञ्च वाञ्छतीत्यर्थः । अत्र स्वमनसः तदनुराग गोचर वस्तु ज्ञानविषये त्वरा शैघ्र्ये चपल मनोहर तदङ्गलता बोधित मन्मथरुजा स्फुटीभावो हेतुः तथा तत्र कालविलम्बाकाङ्क्षित्वे सत्यमियं कान्तैव इत्यादिना कान्तसाम्यात् जात-लज्जित क्रमो हेतुरिति भाव्यं ॥

कालिन्दी । सहि ! कुसुमावचय समय समुल्लसिअ तुङ्ग णिविड घणत्थण भरोऽसहत्थवेविरोऽव लम्बिदच्छिण्णन्त मुहचन्दं तुमं परिरद्धु कामो उवसप्पइ एसो णव णवप्पसूण परिहूद परिमल सीतल फ्फंसो दक्खिणो मारुओ । (२४)

मल्लिका । सानन्दं । किं महाभाओ मारुओ । इति ससम्भ्रमहस्तात् निष्क्रान्ति ।

मारुतः । सहर्षं । अहो प्रसादातिशयो भगवतो मन्मथस्य । यदिस्मृङ्खल प्रसरणं मनोरथानामप्य गोचर मानन्द मनुभावयति । सोच्छ्वासं ।

(२५) सोऽहं सत्यं जगति सुभगम्भावुको मारुताख्या
साम्यात्कृत्वा मदभिगमनं प्रस्तुते यत् समीरे ।
उत्तिष्ठन्त्यास्सल कुचभरं सम्भ्रमोत्सुक्य हर्षं
प्रेमव्रीडाप्रबलनयनं वक्त्रमीक्षे मृगाक्ष्याः । (२९)
सत्यमुक्तं कालिन्द्या मारुतः परिरब्धु काम इति ।
इमामाकाङ्क्षेऽहं किमपि परिरब्धुं प्रणयिनीं
शनैरारोप्याङ्कं स्मरकुतुकलज्जा परवशां ।
इदं पूर्णस्पर्श प्रचुर पुलकोल्लासमर घन
स्तनाभोगां वालासुरसि सहृयं निर्दयमपि ॥ (३०)

---

(२४) सखि ! कुसुमापचय समय समुल्लसित तुङ्ग निविड घनस्तन-भरायस्तन वेपदवलम्बदर्शितपद्यमुखचन्द्रां त्वां ।

(२५) सोऽहमिति ॥ सोऽमवस्था विशेष मनोहर वदनविलोकिता अहं जगति सुभगं भावुकः अलक्षणः सुभगो भवतीति सुभगम्भावुकः कर्त्तरि भुव खिष्णुखा ह्लिता सुकञ् ॥ ऐश्वर्य समभिलक्षणमान इत्यर्थः । भग वैराग्य योनीच्छा ज्ञानैश्वर्येषु चेष्यते इति पुरुषोत्तमः । कृतार्थी भवन्

इति यावत् प्रतीति शेषः ॥ यत् यस्मात् समीरे प्रस्तुते सति मारुताख्या तीव्रात् मारुत नाम्नः उभय तुल्यत्वेन मदभिगमनं मदागमनं (मारुतः परिरभतु काम उपसर्पतीत्या कारकं) श्रुत्वा यतः विरहजन्य काठिन्य मुक्तया उत्थानजवात् किञ्चित् स्पन्दमानः स्तनभरः यस्मिन् कर्मणि तद्यथा भवति तथा विरहे स्तनयोः काठिन्य मुक्तिः प्रतिपादिता च मेधा रुद्रेण। श्याम श्याम कपोलमाननमुरः काठिन्य मुक्त स्तनमिति ॥ अतो नात्र वच-प्रदेनावयवदोषप्रसङ्गः शङ्कनीयः उत्तिष्ठन्त्याः मृगाक्ष्याः (सम्भ्रमः विभाव भूतप्रिय श्रवणादिरावेगः) औत्सुक्यं विभाव भूतप्रिय स्मरणादिः अनुभाव भूत गात्रगौरवादिः सर्वेन्द्रियाणां एकदैव क्रियारम्भः।) यद्वा तादृश विभावानुभावयुक्तं कालासहिष्णुत्वं हर्षः विभावभूतप्रिया-गमनादिः अनुभाव भूत पुलकाश्रुस्वेदादिः चेतः प्रसादः ॥) प्रेम-स्पृहाख्यः सम्भोग विषयेच्छा विशेषः स च रत्याख्यः शृङ्गार रसस्थायी व्रीडा अनुभाव भूत साचीकृताङ्गावरणादि स्वच्छन्द क्रिया सङ्कोचः। आसां शबलः सम्भ्रमौत्सुक्य हर्ष प्रेमव्रीडा शबलः (सम्भ्रमादीनां पञ्चानामपि भावानां परस्परोपमर्दक तया संमेलनेन भाव शबल इत्यर्थः) यः नयनयोर्यस्य तत् तथोक्तं। अत्र नयनयोर्भाव शबलाधारत्वन्तु सम्भ्रमादि तत्तद्भाव कार्य्य भूत कटाक्षादि विविधविकृति सत्त्व प्रयुक्त तत्तद्भाव बोधकता सम्बन्धेन इति बोध्यं ॥ उक्तञ्च। कार्य्य भूतोऽनुभावः स्यात् कटाक्षादिः शरीरज इति। अन्यच्च भ्रू विक्षेप कटाक्षादि विकारो हृदयस्थितं भावं व्यनक्ति यः सोऽयं अनुभाव इतीरित इति ॥ सम्भ्रमादि भाव शबलेन नयनयोः तत्तत् कार्य्यतया विकृति प्रकारस्तु सम्भ्रमेण तरलत्वं औत्सुक्येन निर्भङ्गत्वं हर्षेण स्मेरत्वं प्रेम्णा मधुरत्वं व्रीडया जडत्वमिति ॥ अत्र प्रमाण वचनानि तु प्रागेव प्रदर्शि-तानि। वक्त्रं कर्म दैवे पश्यामि तस्मात् सोऽहमिति पूर्वेण सम्बन्धः तथाच स्वावलम्बन विप्रलम्भ शृङ्गाराङ्ग भूत बहुविध भाव व्यञ्जके तत्तद्भाव कार्य्य भूतः शृङ्गार दृष्टि विशेष सविशेष मनोहर लोचनाञ्चित वक्त्रो त्वद्वदनदर्शनस्यानन्द सुखमस्य स्तनमपि गम्यमानत्वेन स्वस्यैव इति धन्य इति भावः ॥

विलम्ब्य। सनिर्वेदं। हन्त अकाण्ड एव ताण्डवितं हृदयस्य।

ननु परिश्रमालसायाः समीरणागम इत्युक्तिः सम्भाव्यत एव।

कालिन्दी। मल्लिकायाः स्तनांशुकं धारयति। सहि! उट्ठेहि णं मए मन्दाणिलो एव्व वारिओ।

मारुतः। सपत्रासं। किं नु खल्वेषा वक्ष्यति।

मल्लिका। सलज्जं सविषादञ्च। हला विप्पलद्धम्हि।

मारुतः। सहर्षं। उच्छिन्नोऽद्य संशयतन्तुः। हृदय। सफलास्ते मनोरथाः। पश्य।

कादम्बिनीमिवैनां कामय मानस्य चातकस्येव।
दिष्ट्या तवानुकूलो मदनो वीरः पुरः समीर इव॥

मल्लिका। कालिन्दी करोत्क्षिप्ते स्तनांशुके प्रतिच्छन्दमवलोक्य। सहि! मह विरह कातरो एसो एव्व सुलहदंसणो मारुओ उण सो!

---

(२०) इमामिति॥ उरसि अयं पूर्व्वीयस्य स इदं पूर्वः सचासौ स्पर्शश्चेति कर्म्मधारयः तेन जातैः प्रचुर पुलकैः उड्डामरः घनस्तनाभोगः यस्याः सा तथोक्ता तां बालां सदयं निर्दयमपि परिरब्धुं किमपि अत्यन्तं आकाङ्क्षे इत्यन्वयः। अत्र परीरम्भस्य सदयत्व निर्दयत्वयोः बालां (प्रचुर पुलकोड्डामरघनस्तना भोगां) इति पदद्वयं क्रमादेव गर्भं बोध्यं अथवा परी रम्भस्य निर्दयत्वे प्राचुर्य्यं संमतस्य वा हेतुत्वं वदुक्तं तैः। तन्वीयाया स्फुटतनुरिति त्यक्ष्यतामत्र यष्ट्या बौके मत्तभ्रमर पतनाम्मञ्जरी किं नु भग्ना तवादेशा रक्षसि भवता निर्दयं मर्द्दनीया मन्दाक्रान्ता विलसति रसजेभुवदिः सम्पं इत्यादिः।

मारुतः। विलोक्य। सानन्दं। वत्समुत्तं भ्रमरकेण उप-
वीयमाने दृष्टः प्रतिच्छन्द इति।

दयितास्तनपरिरम्भक्रीडस्वच्छन्दमाः प्रतिच्छन्द।
सत्यं त्वमेव धन्यो न वयं तद्विरहदहनदग्धाङ्गाः॥

नवमा। निश्वस्य। भट्टिदारिए सिअङ्कसि ओ समओ अदिवाहणिज्जो। जं कविअ वक्कचन्द मूलिव्व दिट्ठे परिक्खरिअ परिक्खआ तुम्हस्स मेत्त सेसा एसा दे तणु वल्ली। इदो कअं ण कालक्खेवा सहो विरहि जणमुवला सोडिहरण णिग्घिणव्वा वारी मम्महो। जं जाणे अदि अत्त मज्जिअन्दि अहं खणे खणे परिवाविदेसि अत्तणोवि अवसादो विअसिअ मन्दमहुरमुहमन्थर सिसिरिअ तरङ्गिआरूणि उक्कलिदएहिं सविलास घोलिर सिणिद्ध कणीणिआ चुम्बिअं वलम्बहा कुवलअदलमालोल मअच्छीहिं उद्दाम कोमल लज्जाणुवड्ढिअ गमणा गमणेहिं दिट्ठिआएहिं तक्काल सज्जिअ मअरद्धअ धणुम्मुक्क तणुमम्मकलम्ब कअम्बअ पुङ्ख सङ्कणिज्ज णीरन्ध वम्मल पुलउब्भेद जज्जरिज्जन्तदेह सलिल संखालिअं गराअ वाअड लावण्णादि सआए भट्टिदारिआए दिट्ठो तारिसावत्थो सोजण णअण णिम्माण वम्महो मारुओ। तदप्पहुदि तच्चिन्तालम्बणं हिअअं तप्पडिच्छन्द दंसणा लम्बणं णअणं तब्भुसण धारणा लम्बणं सरीर तल्लाह पच्चासा लम्बणं जीविअं धारयन्ती वलित्तवाअअत्त विज्जु मालेव्व कज्जम्म सलासाविअ पडिक्खीणावि विसेस रमणिज्जा होइ। अविअ भअवङ्कुमा कुम्भणो सह वरम मल्लवावि मणिसोपाणपरं पारोह क्कम्मिरत्थणरअण

असंपत्तम्मि पज्जाव्वम्र आहिम णिसुसुढ़ा मोढ़इ। अह कहं कहंवि लद्धणिद्दा सिविणम्र संभाविम्र पिअसंगमो उम्मिसन्त वम्मह सलिलसेम्र परोहन्त पुलम्र कण्ठइम्र कले वरा। कोमल हत्थ जुअल सोत्ति दावा पिहिम्र वण सिहणत्थणा मण्डला ईसि विलम्बिम्र नीसरन्त सोमल्ल णीसास णिवेदिम्रा पंदविसेसा खणं निप्फंदा होइ। तदो मन्द मन्द सुक्क सिक्कार जज्जरिम्र दन्तक्कन्द जोण्हा कुसु- मिम्र विम्बाधर णिरोहवावुडेक्क करकमला परोप्पर णिविड़ संघड़िम्र सिज्जन्त पीवरोरु जुअल विलुलिम्र णिअंव दुऊल दर सिढ़िल णीविवंध रंभणप्पसारिए दर पाणिपल्लवा अपरिप्फुड़ क्खरं किं वि किं वि मन्तअन्ती पड़िवुज्झइ णाह माहम्र! कोउ मं परिरम्भइ भण्णिन्ति वाहर- न्तोए एव्व पड़िवोहो एआरिसं तुह पच्चक्खं एव्व। पुव्वे जूत्था अपरण्हे आलातुमं असत्तमं गआणि- त्ताला साअंतणा मज्जणत्तिस कुसुमउर सुन्दरी णिउरंवल सिहर भमर मञ्चरे तक्काल विघड़न्त विअइल मम्रण सोर हुंकार झुरझरे घहि उप्पउत्त गंधवहकिसोरे अवि- णाढ़ वारणं झत्तिठिमां कण्ठे मं गाढ़ं गाढ़ं आलिङ्गिम साहि! कोमालिए मणेहि एदं परमं परिरंभं कह- णिज्जोम तह विअसन्त पुण्डरीअदल विसाल लोअणो परव्वस णाध भिसो सो अणो। जह मं अणणांतरेवि अम्माणुरत्त हिअम्रं मणे इत्ति वापक गआम्र कण्डीअन्दि सिम सरणम्मि किण्णणिवम्रा अवणं वणप्परूढम्र वाल- कड़े सिदुदुमण लदाणिमणव्विअवेरत विलाविणी दन्व-

ज्वर सोहग्ग लाहसिलाहणिज्ज भंपन्त चम्पग्र मञ्जुल सोजल मुहरं पल्लव कुडुङ्ग करअलेन फंचिदुं आढ़त्तवदी॥

कालिन्दी। सवाष्पं। कर्णौ पिधाय ण इन्दोवरं सुधिया साहससीलाए वुत्तन्दं।

नव। अह भट्टिदारिए जइ एव्वं एदा उण सव्वा पावअं पविसत्ति त्ति क्रिअपडिआणाणं चरणंवुअ पल्लत्थ केस-ग्गन्थं पणमंतीणं अह्माणं सहीणं निब्बन्धेण दक्खिण छिम्मआ कहंवि पचाणीदा।

मारुतः। सानन्द सकरुणञ्च।

अस्या निशम्य निजजीवित निर्व्यपेक्षाः
प्रेमप्रकर्ष पिशुना ललिता विचेष्टाः।
हा हन्त घोरमदनज्वर गाढ़ तप्त
मामोदते मम मनः परिदूयते च॥ (३१)॥

अहो महानयं प्रमादः।

नव किसलय मुग्धं गात्रमेतन्मृगाक्ष्याः
पवनचलित जातीसूनपातात् सहिष्णु।
अपि कुलगिरि कूटस्थेमभाजां जनानां
असु विमथन चण्डामाश्रथास्ते पृषत्काः॥

---

(३१) अस्या निशम्य इत्यादि। मम मनः कर्तृ आमोदते सन्तुष्यति परिदूयते खिद्यति च। अत्र नायिकायाः स्वविषयक प्रेमप्रकर्ष पिशुन चेष्टा श्रवणात् स्वमनस आमोदः। निजजीवित निर्व्यपेक्ष चेष्टा श्रवणात् खेदः। इति साभिप्रायत्व चेष्टाविशेषणद्वयस्य अतः परि-करोऽलङ्कारः।

नव। किं कहुआ पुणो पुणो पट्ठाणं मुहं कण्ठलग्गं जीविअंवि एसो महाभाअ वच्छट्ठल संगग्ग सूहवो हारो एक्क समंवि कण्ठलग्गो रन्धेइ ॥ इति मल्लिकाया कण्ठे हारं दर्शयति ।

मारुतः । सस्पृहं ।

ब्रूहि ब्रूहि प्रियसख ममाप्यम्बुभाजा त्वया प्राक्-
मुक्ताहार स्थिरविरचितं तत्तपस्या प्रकारम् ।
येनोत्कण्ठा धवलिमधुरे कण्ठमूलेनु सक्तः
सारङ्गाक्ष्या स्पृशसि हृदयं स्निग्धमाणस्तनाभ्यां ॥ (२२) ॥

नव। अञ्जलिं बद्धा मल्लिकां प्रति । सहि वसिमणं कुलअं णअराणंविगन्धव्व विवाहा सुणिज्जन्ति तेसु तेसु इतिहासेसु । ता पेसणिज्जा अहं कालिन्दी वा आणइ सामो गूढं तुइ हिअअ वल्लहं जणम् ।

मल्लिका । सनिश्वासम् । अपरिक्खिदाणुराए तस्सिं

---

(२२) ब्रूहिब्रूहीति। ब्रूहि ब्रूहि इत्यादरात् द्विरुक्तिः। मुक्ताहार इति माल्य सम्बुद्धिः। अन्यत्र मुक्तः आहारो येन तस्य सम्बुद्धिः। अत्र मुक्ताहारं प्रति मल्लिकायाः कण्ठमूल स्तनहृदय संस्पर्शरूप फलप्रदः कोनु तपो विशेष स्त्वयानुष्ठित इति मारुतस्य प्रश्ने प्रस्तुते अप्रस्तुतः। प्राग् जल मध्यवर्त्तनेन नारीश्वरशङ्कर पाशुपतादि मन्त्र साधन तपसा मनुष्ठाय तत् फलतया कामपि साध्यनायिकां कण्ठग्रह स्तनाश्लेष हृदय स्पर्शादिकामवेद विधि विधानप्रकारेण अनुभुञ्जानं कञ्चित् प्रियवयस्यं नायकं प्रति अन्यस्य अनाहार जल प्रवेशादिना प्राक् त्वदनुष्ठित नारीश्वरशङ्कर तपसा प्रकारं मम ब्रूहीति सादर मनुनयः प्रतीयते । इति समासोक्तिरलङ्कारः ।

जणे कहं ण पेक्खिज्जइ जइ सो अवसद्दस्स हिअओ दुवे-
ताणो वरयत्त (प्रयत्न) चावलं एव्व सिक्खइ ।

मारुतः । सावक्षेपम् ।

मा मा त्वदेक जीवितं आशङ्केथा स्त्वमन्य सक्तं मां ।
इच्छत्येरण्डलतां लोलम्बः किन्नु कमलिनीं लब्धुम् ॥(२३)॥

कालिन्दी । स्वगतम् । एदाए अप्प णअणेहिं अदठ्ठुण-
सव्वस्साण पच्चओ होइ । प्रकाशम् । णं भणामि पआसिदं
एव्व अणुराअ सव्वस्सं पुणो सिहामणिदाणेणेत्ति । शिखा-
मणिं करतलेन परामृशन् । तदिदं छाठकेति पठति

मारुतः । अहो विधेरतिदुर्घटस्यापि घटने पटी-
यस्ता । क्वायं सिंहलद्वीपस्थो मणिः क्वेयं मगधपुरमण्डने
मल्लिका । मणिं प्रति ।

आवां द्वावपि रक्तौ तव पुनरन्या शिखामणे नियतिः ।
यत् सुरभिनीलमस्याः कचाञ्चले नालकान्तमामुग्रसि (२४)॥

---

(२३) मामेति । पूर्वार्द्धस्य स्पष्टोऽर्थः । तथाहि लोलम्बः भ्रमरः
कमलिनीं लब्धुं इच्छति । इति काकुः। किन्तु आहोस्वित् एरण्डलतां
लब्धुमिच्छति इति योजना । दृष्टान्तोऽलङ्कारः ।

(२४) आवां द्वावपीति । रक्तौ अनुराग विशिष्टो वर्णविशेष
विशिष्टश्चेत्युभयम् । अत्र शिखा मणिं प्रति आवयो रक्तत्वेन
साम्येऽपि त्वरनीव नायिकाकच स्पर्श प्राप्तिरूप विधि सञ्चायवत्तयात्वमुत्-
कृष्टोऽसीति मारुतवचने प्रस्तुते कयाचिन्नायिकया सह कथञ्चाख्य
सम्भोग विशेषमनुतिष्ठन्तं कञ्चिन्नायकं प्रति अन्य नायकस्य असूया
वचनं अप्रस्तुतं प्रतीयते इति समासोक्तिः । समासोक्तिः परिस्फूर्तिः
प्रस्तुते ऽप्रस्तुतस्य चेदेति लक्षणात् ।

नेपथ्ये । कालिन्दि ! अत्थि भअवदीए आदेसो ।

सर्वा आकर्ण्य । सारिसि आए विअ सरो ।

कालिन्दी । सखि भअवदीए आहृदह्म । ताझत्ति गच्छह्म ।

मारुतः । आकर्ण्य सविषादं । अहो विधेर्वैलोम्यम् ।

तृषितचकोरकचञ्चौ पतिता यच्चन्द्रिकेव जलदेन ।
अपनीयतेऽक्षिपथतश्चिरकाङ्क्षित लब्ध दर्शना सुमुखी ॥

सर्वाः निष्क्रम्य लतागुल्मान्तरिताः प्रविशन्ति ।

मल्लिका । कालिन्दि ! अवि सच्चं मारुओ एत्थ वट्टइत्ति ।

कालिन्दी । कहं भणिस्सदि सारसिआ ।

नव । सहि ! अज्ज सोम सरम्मि ण्हादुं गच्छन्तीए एदाए किं णु तुह कसो कहिअं ।

कालिन्दी । स्वगतम् । ण कहइस्सं सम्बरअस्स अविआअं उब्भिसं खु मन्तवीजं ण फलस्स कप्पइ । प्रकाशम् । णं एदं एव्व अदिमुत्तलआमण्डवे णिउढो वट्टइत्ति ।

मारुतः । हन्त गतैव मल्लिका ससखी । निर्गच्छति ।

मल्लिका । दृष्ट्वा सहर्षम् । हन्त जलहर मण्डलादो-विअ चन्दो णिग्गओ लआमण्डवादो मारुओ । सशङ्कम् । हन्त एक्कोएव्व । णं हिअअं मण्डव सञ्चारिणीए पिअ-सहीए एव्व सणहाओ मारुओ ।

मल्लिका । अहो मणोरहाणं आदिप्पसङ्गो ।

कालिन्दी । कोएत्थ अदिप्पसङ्गो । णं तुमं एव्व दट्ठु कामो वञ्जिअ सअल परिअणो लआ मण्डवणिउढो एत्थ एक्को एव्व वट्टइ ।

मल्लिका। सानन्दम्। हुं जइ एव्वं आअस्सिदाइ खु-त्तेण धीरहि अएण तेण एवस्साइं अहाणं अम्हणाइ।

नव। सहि अह्मेवि सुणिस्सामो हदस्स मअण ज्जर गाढतत्तस्स तारिसाइं एव्व अम्हणाइं।

मल्लिका। सप्रत्याशम्। अवि एव्वम्। निःकम्प्य। सहि अज्ज पडिच्छन्नं अणुहरइ एसो। कंचुकमाश्रित्य। यथा-न्तरेणेति पठति

मारुतः। सोत्कण्ठम्।

प्रथमिकी घनवृष्टिः प्राप्ता शिशिरा निदाघतप्तस्य।
आकस्मिकेन सा पुनरपनीता क्वापि पवनेन। (२५)

नव। सहि। अविसुदं महाभाअस्स वअणम्।

मल्लिका। णोमालिए! अणिव्भिणाभिप्पाअं खु एदं।

मारुतः। स्मरपीडां नाटयन्। यावत् तस्याश्चरणाम्बुजा-क्रान्तदेशमाश्रयामि।

मल्लिका। साशंसम्। का णाम तच्चरणसम्भाविअदि।

मारुतः। परिक्रम्य। अत्र कुसुमान्यपचितानि मल्लिकया।

मल्लिका। सपुलकम्। स्वगतम्। अह्महे मह णाममत्तकहा-मेत्तेण रोमञ्चिआ तणुयट्ठी।

(२५) प्रथमिकेति। इह अप्रस्तुतेन शिशिरकान्त वर्णनेन मारु-तस्य स्वकीय गाढकठोर स्मर सन्तापानन्तर वक्ष प्रथम दर्शनाया मल्लिकायाः मन्दाकिन्या स्नान रूप प्रतिभ्रष्कक्रमात् निर्गमनरूप प्रस्तुत सर्वं प्रतीयते इत्यतोऽप्रस्तुत प्रशंसालङ्कारः। अप्रस्तुत प्रशंसा स्यात् सा यत्र प्रस्तुताश्रया इति लक्षणात्।

मारुतः ।

एता धन्यतमा लता मधुमुखैः सूनानि संगृह्णती
या सर्वाङ्गसुगन्धिरिन्दुवदना याः स्पृष्टवत्यात्मना
कुन्तगन्धिषु तत्र तत्र लभता मद्यापि माध्वी लिहां
रावैर्हन्त रुदन्ति तत् करतलस्पर्शेन दूरीकृताः ॥ (२६)

मल्लि । मडुर मडुरं वण्णिदं जाणइ महाभाओ

मारु । अधो विलोक्य ।

लाक्षाङ्कैरनुमीयते तत इतः सुव्यक्तमग्राङ्गुलि
न्यासैरत्नलताग्रपुष्पहरणे यत् तत् पदाग्रस्थितं ।

अन्यतो विलोक्य ।

एता हन्त परिच्युता सुमनसो मत्तालिमालाभय
व्यावृत्तात् करपल्लवादिह पुनस्तस्याः कुरङ्गीदृशः ॥

मल्लिका । सलज्जस्मितम् । अज्जउत्त सच्चं पच्चक्खी किदं एव्व महाभाएण ।

---

(२६) एता इति । मधु मुखैः सूनानि संगृह्णती सर्वाङ्गसुगन्धिः इदं साभिप्रायविशेषणं पद्मिनीत्वादिति भावः । यदुक्तं सुरतपयसि यस्याः सौरभं दिव्यमङ्गे इति । या इन्दुवदना मल्लिका या लताः स्पृष्टवती अतएव धन्यतमाः एता लताः इदमेव कष्टं तस्याः मल्लिकायाः करतलस्पर्शेन दूरीकृताः विरहिता सत्यः तत्र तत्र कुन्तगन्धिषु तत् करतलस्पृष्टेषु निबिडकुसुमगन्धेषु अद्यापि रवतां गुञ्जतां माध्विकायाः सर्वाङ्गसुगन्धित्वात् तत्करतलस्पर्शेन भावनाक्तत्सु कुन्तेषु गुञ्जतामित्यर्थः । अन्यथा कुन्तानां गन्धाभावात् गुञ्जनानुपपत्तिरिति भावः माध्वीलिहां आत्मना भ्रमराणां व्याजेन रुदन्ति इति मन्ये इत्युत्प्रेक्षा हन्तेति खेदे ।

तविट्ठुरेसणा विरहो पवाहो जेण एव्वं विहाणि पण-
ट्ठवसण्णाणिवि सुणाविसि ।

मारुतः । परिक्रम्य । तदेतत् प्रियतमा वस्थान धन्यं
लतामूलम । अत्र नवमालिकया वर्णितो रमणीयो धृति
कम्पदश्च तस्या मान्मथो व्यतिकरः । यावदत्रोपविशामि ।
कर्णदानम् । सखि ! नवमालिके ! ।

नव । भट्टिदारिए ण सक्कुणोमि मन्दभाएण सहिस्स
आसावि आदवीहिन्ति उपसप्पिदुं ।

मल्लिका । मा मा पच्चाविहि सुणिस्सामी खुणं एदस्स स
कीस आलावम् ।

मारुतः । पश्य ते प्रियसख्या उपालब्धं । यत् पर-
व्यसनानभिज्ञं मां मन्यते । न मन्यते पुनर्ममाप्यवाङ्-
मनस गोचर मनुमनङ्ग ज्वरोद्दामं ।

(२८)मया विस्मृयन्ते श्रवण परुषाः कोकिलरवाः
समीराः सह्यन्ते चलित नव माकन्द कलिकाः ।

---

कीर्त्तितानि तदन्धोत्यय मूचे इति भद्रत् प्रयोगः) एवञ्च कीर्तं मनः
केशिद्यो इत्यादिकाऽसेव विधमदुष्करमित पाधा बाहुल्य सूचक मत्
प्रियतम व्याहाराणां श्रूवणाभावेन तव युवतुरूपेऽपि गितान्तनिठुरत्व
स्फुटीभावात् त्वं युवति जनानेव निर्दयं पीडयसि केवं युव जनानिति
प्रात्सर्गोऽपवादस्तव मिथ्याभूत एव सम्पन्नाबोद्धिति भावः । निष्कारण
कारुणिक इति सम्बुद्ध्या एवंविध प्रणयिवचन श्रवणहेतुत्वेन त्वया
मम महोपकारः कृत इति भावः ।

(२८) मया विस्मृयन्ते इत्यादि मूर्च्छाव्यतिकराः मोहविशेष जन्य

तथा निस्तीर्थेन्तो निशि निशि सुधा पिच्छिलकरे
सन्निधाने चन्द्रे कति कति न मूर्च्छा व्यतिकराः॥

मल्लिका। स्वगतम्। अम्महे मह किदे तेल्लोक्क मङ्गल सुन्दरंगस्स एदस्स एआरिसं वसणन्ति ण जाणिदं मए। णिग्घस्स। अहवा जाणन्तीवि किं करेमि।

नव। जनान्तिकम्। कालिन्दि! एसासु भट्टिदारिआ पच्चक्खिअ मादुआणुराआ गुरुअण वसे वट्टन्ती ण पारेइ सअं एव्व अप्पाणं समप्पिदुम्।

कालिन्दी स्वगतम्। जुज्जइ सरिसं खु एदं विसुद्धस्स कुलकण्णआ सहावस्स। अविदु कालक्खो वा सहो मअ-रद्धओ। ता एव्वं भणिस्सं। प्रकाशम्। सहि मल्लिए एव्वं अणुरत्तो तुइ सअल जण णअणाणंदो महाकुलप्पसूदो माढओ पलआणलकप्प कंदप्प सरपडणा ढज्जन्त सुउमारङ्गो बलिअं खु किलं मइ। ता जइ खणंवि उवक्खिज्जइ मसे मणुवंद एव्व मोहोवा असं किंम्बिवा भविस्सदित्ति।

मल्लिका। सखेदं। मा मा अमङ्गलाइ संकेसि। इति सवाष्पं ध्यायति। प्रविश्य चित्रफलकहस्तो भ्रमरकः। णाहं! दिव्वगन्धेण लोआ मां जाणन्ति मालिआ णाणीदा चित्त-फलअं उण एदं। इत्यर्पयति।

माधवः। भ्रमरक! उपायज्ञोऽसि। इति चित्रफलक-

---

व्यसनानि इत्यर्थः। अथ व्यतिकरः पुंसि व्यसन व्यतिषङ्गयोरिति मेदिनी।

मादाय । यावत् मया लब्ध प्रियतमा दर्शनयोद्दर्शयोर्युव मानन्दयामि तत् प्रतिच्छन्ददर्शनेनापि । निर्वर्त्तयति ।

कालिन्दी । मए तं एव्व एदं चित्तअरस्स जं भमरएण कहिअं । सर्व्वाः सविस्मयं पश्यन्ति ।

नवमा । पेच्छ पेच्छ अच्चेरं विअडसिहर सहस्स मण्डिओ कोवि कोवि गिरीन्दो लिहिओ । पुनर्निर्वर्ण्य । तम्मिदंव-इसक्खलिअ विमल सलिलो कोवि णिज्झरो वि । सहर्षम् । एदस्स उण तीरज्जणघरम्मि अदिट्ठ अरोहिं दिव्वरूवाहिं सहअरीहिं परिवुदा पिअ सहीवि एसा ।

मारुत: । भ्रमरक ! एतद्दर्शनादारभ्य विस्मय स्तिमितं मे हृदयं । कथं द्वीपान्तरस्थेन चित्रकरेण मल्लिका दृष्टा कथञ्च सा दिव्यजनचं क्रमोचिते पर्वते लिखितेति । पठति ।

शैलेन्द्रो हिमवानयं प्रतितटं विद्याधरै राश्रित:
क्रीड़द्दिग्गज गण्डदान कलुषा सेयञ्च भागीरथी ।
अस्यास्तीर लता गृहे पुनरसौ मध्ये सखीमण्डलं
क्रान्ता कन्दुक खेलनेन लिखिता मज्जीवितं मल्लिका ॥

मल्लिका । सोत्कण्ठा कारणं । अम्महे चिरपरिहूओ विअ हसोपदेसो एदाओ पिअ सहीओ ।

नव । साकूयमिव । अम्मो कहं ण लिहिआ एत्थ सही मण्डले ।

भ्रम । सव्वं भणिदं णाहेण । गन्दुअखेलणेण कि-लिन्तेति । एदाए उण पत्तन्त पाडलम्मि कम्पले कमले विअ राजहंसो लक्खिज्जइ मोत्तिअ गन्दुओ

मारुत: । निर्वर्ण्य सस्पृहं ।

विश्लिष्यन् पतयालुरंसविधृतो धम्मिल्लभारो महान्
वर्म्माम्बुच्छुरितं मुखं स्तनतटोन्निद्रच्युता कञ्चुली।
नीवीकिञ्चिदिव श्लथा मणिमयी विस्रंसिनी मेखला
क्रीड़ान्ते सविशेष सुन्दरमिदं तन्व्या वपुर्लाघवे॥

नव। भट्टिदारिए एदं दट्ठुण अम्हाणं कीलापव्वग्र खेलणाणि सुमरिज्जन्ति।

मारुतः। समदनोन्मादं। अस्याः खलुः।
स्विन्नालस नयनान्तं स्विन्नालिक लग्नकुन्तल स्तवकम्।
वदन मवलुप्त तिलकं मदनं नेदयति द्रवयति धृतिं मे॥(१८)

मल्लिका। सेर्ष्यं प्र मराद्भत्य। सही्यो अवि सच्चं अहं एव्व लिहिदह्मि।

नव। जनान्तिकम्। कालिन्दि! देक्ख णिम्रं पाड़च्छन्दं असेन्ति संकंती ईस सुसमि आलि अपड़िमा लग्रकूलं किम्र सुन्दरवग्रणा कमला भट्टिदारिया। प्रकाशम्। अदि माणिणि! मा कुप्प माकुप्प किं णदिट्ठा वामकुम्भकुम्भ पसत्था सहग्रा मालिआ।

मल्लिका। विलोक्य सलज्जम्। हलि जाणिदो एदाहिं मह ईसा कलुसिदो भावो।

मारुतः। सानुकम्पम्। हन्त न विरमत्यस्याः परिश्रमः। भ्रमरक! आनीयतां नातिदूर भाजः सोमसरसः कमलिनी दलानि। यावदहं शनैः वीजयामि।

---

(१८) स्विन्नालसेति। नेदयति सन्निधापयति द्रवयति दूरीकरोति इत्यर्थः।

सख्यौ । भट्टिदारिए दिट्ठिश्रा वड्ढामो मन्हाभाश्रो परिश्रणो विश्र तुम्हं वीश्रणां मि पवट्टइ ।

मल्लिका । श्रहं विश्र एसोवि सच्चं पड्डिक्कोम्हि इ ।

भ्रमरकः । सविषादम् । गाह ! चित्तं खु एदम् ।

मारुतः । भ्रमरक ! सत्यमात्थ ।

क्वचिदभ्रं क्वचन घनः क्वापि सरोऽन्यत्र कुवलय द्वन्द्वम् ।
एकत्र चापवल्ली परत्र मौर्व्वीति चित्रमेवेदम् ॥ (४०)

मल्लिका । स्वगतम् । हन्त अज्जवि ण णिवुत्तो एव्वं अणुरत्तं पेच्छा गदुश्र परिरद्दु कामम्हि ।

---

(४०) क्वचिदभ्रमिति । भ्रमरकेण आलेख्यार्थकतया चित्रमित्युक्ते तस्य स्वयमद्भुतार्थकतामभिप्रेत्य तथात्वमेव समर्थयन्नाह । क्वचिदिति क्वचिदेकत्र अभ्रं गगनं क्वचन अन्यत्र घनः मेघः क्वापि एकत्र सरः अन्यत्र कुवलयद्वन्द्वं एकत्र चापवल्ली परत्र मौर्व्वी ज्या इति हेतोः इदं चित्रमेव अद्भुतमेवेत्यर्थः । लोके हि सुप्रसिद्धतया सह भावमापन्नयोः अभ्रघनयोः सरः कुवलययोः चापमौर्व्योश्च साम्प्रत मभूतपूर्व्वं पृथक्त्वेन वर्त्तनमिति हेतोरद्भुतमेवेति भावः । अत्र अभ्रघन सरः कुवलय चापलता मौर्वीपदैः क्रमात् मध्यकच नाभिनेत्रभ्रू कर्णपाशानां सङ्ग्रहः । मौर्वीपदेन रोमलताया वा सङ्ग्रहः क्वचित् रोमलताया-रज्जुसादृश्येन वर्णनात् । यथा, स्तनकनक कलसयुगलीं पूरयितुं नाभिकूपकान्यस्तं शिप्रा यौवन लक्ष्म्या रज्जुरिवाभाति रोमरेखेयं इत्यादि । प्रकृते उपन्यस्तानां अभ्रसरश्चापानां घनकुवलयमौर्वीणां च क्रमात् परस्परमाधाराधेय भावेन एकत्रवर्त्तनं लोकप्रसिद्धं इह पुनर तथात्वेन एकैकस्य एकैकत्र वर्त्तनं इति इदं अप्रसिद्धं आश्चर्य्यमेवेति भावः । रूपकातिशयोक्तिरलङ्कारः । रूपकातिशयोक्तिः स्यान्निगीर्याध्यवसानतः इति लक्षणात् ।

सख्यौ । सहि ! अज्ज तुमं एव्व परव्वसणं ण जाणासि ।

भ्रमरकः । णाह ! णं भणामि पडिच्छन्दो एसोत्ति ।

मारुतः । सखेदम् ! किं प्रतिच्छन्दएव । हन्त !

अतिदुर्लभां सुधांशोरम्भः प्रतिविम्बितां मूर्त्तिम् ।
चापलमस्यनुकृतवान् वालस्यादातु कामस्य ॥

सोत्कण्ठा सोहृषल्लापम् ।

आश्लिष्टः प्रलयानलैः किमथवा स्पृष्टः पटीरानिलैः
आहोस्वित् परितो हृतोऽस्मि सकलैः सम्भूय चन्द्रातपैः ।
जाने नाहम किं पचा न विभवः कोऽप्यङ्गमङ्गं दहन्
रुन्धानः करणान्युदेत्य विरतं तापोनु मोहोनु वा ॥(४१)

सोन्मादम् । भ्रमरक ! कोऽयं प्रदेशः

सर्वाः । सावेगम् । अम्महे महन्तोखु पमादो ।

मल्लिका । सहीओ ण जाणे किं मए दाणिं कादव्वंति ।

भ्रमरकः । सभयं । णं वसन्त वणुज्जाणं एव्व ।

मारुतः । परितो विलोक्य । युज्यते एतत् ।
अयमयं हि तरुण माकन्दतरोमूले ॥ (४२)

---

(४१) आश्लिष्टः प्रलयानलैरिति । अहं न जाने इत्यन्वयः । किन्तु ज्ञायमानमिदमित्याह । अकिञ्चनान विभवः अनुद्भमहिमा कोऽपि अनिर्वचनीयः अङ्गमङ्ग प्रत्यवयवं वीप्सायां द्विरुक्तिः । दहन् करणानि इन्द्रियाणि रुन्धानः विषयेष्व प्रवर्त्तयन् तापः ज्वरो नु मोहोनु वा इयोः रप्युक्ता गुणवैषिष्ट्र्येऽतुल्यत्वादन्यतरत्व शङ्का अविरतं भवेति इत्यन्वयः ।

(४२) वसन्त वनोद्यानत्व मभ्युपेत्य तत्र हेतुमाह । अयमयं हि

सन्धाय पञ्चवाणं भ्रं कुर्व्वन् मौर्विकार्मुकं मदनः ।
कर्षति रति कुचमण्डल काठिन्या हैत साक्षिणा दोष्णा ॥
(४२) असुहरणोद्यत मेनं यावत् क्षण विलम्बाय प्रार्थये ।

साञ्जलिबन्धम् ।

अयि शृणु चरमं मे प्रार्थनं पुष्पकेतो-
क्षणमिव विरमास्मादुद्यमादञ्जलिस्ते ।
सकृदवहितबुद्धि स्तावदन्ताम्बरं तद्-
वदनममलसनेत्रं मल्लिकायाः स्मरामि ॥

इति नयने निमीलयन् मोहं नाटयति ।

---

तरुण माकन्दतरोर्मूले सन्धायेति । हि यस्मात् अयमयं इत इतो दृश्यमानः (इति हस्ततो निर्देशः ।) त्रासाद्विरुक्तिः । उभयत्रोत्तम्भ । इदमस्तु सन्निकृष्टमिति । संभ्रमेण प्रवृत्तौ यथेष्टमनेकधा प्रयोगइति च । मदनः कर्त्ता तरुणमाकन्दतरोः तरुणचूतवृक्षस्य मूले पञ्चानां पूरणं पञ्चमं नान्तादसंख्यादेररिति डटो मट् । तञ्च तत् अस्त्रञ्च तत् सन्धाय संयोज्य । कार्मुकं धनुः कर्म्म भ्रं कुर्वती मौर्वी यस्मिन् कर्म्मणि तद्यथा भवति तथा भ्रं कुर्व्वन्मौर्वि । अथवास्य कार्मुक विशेषणत्वेनान्वयः । रति कुचमण्डल काठिन्याद्वैत साक्षिणा स्वप्रिया स्तनमण्डल कार्कश्या-ऽभेद शंसिना स्वानुभूत तत् कुचमण्डल काठिन्य सदृश काठिन्य प्रकाशके-नेति यावत् । स्वस्य अविरहितत्वाद्विरहि दुःखविचारं विना क्रौर्य्य धुरं धरेणेति भावः । दोष्णा करेण कर्षति तस्मात् युज्यते एतदिति पूर्वेण सम्बन्धः । भ्रं कुर्व्व भ्रमर सम्भृत कुसुम पूरित माकन्ददर्शनादिय मुक्तिरिति बोध्यं ।

(४२) यावत् प्रार्थये निश्चयेन प्रार्थयामीत्यर्थः । यावत् पुरेत्यादिना यावदिति निश्चयार्थको निपातः लट् च ।

मल्लिका। सकरुणानुरागं सस्मितमावेशम्। हन्त मुज्झन्ती विश्र दीसइ। सर्व्वाः सत्वरमुपसर्पन्ति।

सख्यौ। सहि। धारेहि उत्तं गेण।

मल्लिका। सपुलक मङ्के धारयति।

भ्रम। दृष्ट्वा सानन्दम्। प्रणम्य। स्वगतम्। एदावि इह ठिश्रा। प्रकाशम्। दिट्ठिश्रा संपत्ताहो तत्तहोदीश्रो।

कालिन्दी। णोमालिए। करश्रल मल्लिश्रकप्पूर पल्लव सारेण णिगाल देवे सिञ्चह्म। उभे तथा कुरुतः।

भ्रमरकः। णाह पड़िवुज्झस्स णं तत्तहोदीए मल्लिश्राए सश्रं धारिश्रोसि। पुव्वंवि तेसु तेसु मुज्झाश्रमेसु एदाए णामग्गहणमेत्तेणेव्व पड़िवुज्झसि।

मल्लिका। सकम्पं करतलं वक्षसि निधाय। महाभाश्र! किं ण सुणिज्जइ भमरश्रस्स वश्रणम्।

मारुतः। प्रबुध्यमानः सरोमाञ्चम्। स्वगतम्।

स्पर्शः एष हृदयङ्गमः सुधावर्षवद्वपुषि को विभाव्यते।
चन्द्र चन्द्रमणिहार मालती गन्धसार घनसार शीतलः ॥४४

चक्षुषी उन्मील्य पश्यति।

सख्यौ। सहि! दिट्ठिश्रा वड्ढासी जो णाहा

(४४) स्पर्शएष हृदयङ्गमः सुधेति। चन्द्रश्च चन्द्रमणिहारश्च मालती-जातीकुसुमानि च गन्धसारः चन्दनरसश्च घनसारः कर्पूरश्चेति द्वन्द्वः। तद्वत् शीतलः उपमानानि सामान्यवचनैरिति कर्म्मधारयः। वस्तूप-मालङ्कारः। यदुक्तं। अनेनैव कविनान्यत्र चन्द्रनोदक चन्द्रांशु-चन्द्रकान्तादि शीतलः। स्पर्शस्तवेत्यतिशयं बोधयन्ती वस्तूपमेति।

सिणिद्धो विम्न कुमुदा ग्ररो पड़िवुजभो महाभाम्रो ।

सर्वाः हर्षं नाटयन्ति ।

भ्रम । सानन्दम् । णाह मुजझा ममे लोमण णिमीलिणेण मुहिए हमादो वल्लीणि ण्जादो झत्ति सदम्र सम्भमं ग्रामदुम्र लम्बिम्रोसि तत्तहोदीए ।

मल्लिका । लज्जां नाटयति ।

मारुतः । सहर्षम् । हन्त न गतमेताभिः ।

उपकृतं मयि मूर्च्छें यत्त्वया स्वीकृतेम-
व्यगणित गुरुशङ्काव्रीड़मासाद्य सद्यः ।
वहल पुलक पाली पक्ष्मलोत्तुङ्गपीन
स्तनकृत परिरम्भं कातराक्ष्या धृतोऽस्मि ॥ (४५)

नेपथ्ये । भो भो जनाः ! पलायध्वं पलायध्वम् ।
एतौ द्वावपि तर्कितावति मदौ विद्राविता धोरणौ
धावंधावमितस्ततः पथिजनान् व्यापादयन्तौ रुषा ।
वेतण्डौ पृथुदन्त दण्ड विकटावुच्छृङ्खला वेनयो-
रेकः सोम सरः परस्त्विह वसन्तोद्यान माढौकते ॥

सर्व्वे आकर्ण्य ससम्भ्रममुत्तिष्ठन्ति ।

मारुतः । विलोक्य । अति कष्टं वर्त्तते ।
दूरान्निर्धावमानानपि लघुगमनः पृष्ठतोऽनुद्रुतः सन्
उच्चैः फोट्कारदानश्रवणनिपतितान् सद्दशः सद्दशोऽयम् ।

---

(४५) उपकृतं मयीति । अगणिते गुर्व्वी शङ्काव्रीडे यस्मिन् कर्म्मणि तद्यथा भवति तथा अगणित गुरु शङ्काव्रीडं सद्यः आसाद्य इत्यन्वयः ।

पादाग्रक्रान्तदेहत्रुटन घट घटत् कुर्व्वदस्थिप्रमथ्नन्
भीषादन्तोद्यतान्धः किमपि तनुमतः पिण्डपिण्डं पिनष्टि ॥

अम्म ! णाह ! एसो णिब्भररो संणिब्भिण्ण देहु प्पाडिअ पाडलं तमालो वेढ़िअ कराल दन्त मुसलो साअर मज्झ वेला विलग्ग विब्भुम्मण्डल मण्डिअ सिक्कोविअ मन्दरो उब्भिज्जन्त गण्डमूलच्चोरन्त मुहुर भमरसण्ड जयडिण्डिम घोस सुहओ अमणो अड्ठलुड़िआ इट्ठ लोहसिङ्खला खलखला अन्त चलणो ईसि चउरिअ पिङ्गल लोअण भीसण मुहाभोओ इदोमुहं एव्व आअच्छइ दुट्ठ वारणो ।

सर्व्वाः सकम्पम् । महाभाअ ! परित्ताअदु परित्ताअदु ।

मारुतः । माभैष्ट । अहमेनं निवारयामि दुष्ट वारणं ।

इति सत्वरं बद्ध परिकरो निष्क्रान्तः । (४६)

मल्लिका । सविषादम् । हत्थि हत्थि अहिमुहं धाविओ एव्व महाभाओ ।

अम्म । सहर्षम् । हन्त दूरप्पसारिअ सुण्डादण्ड सोवाणं कदुअ आरूढ़ मत्थएण णाहेण कक्खमूल घड्डिअ णिट्ठुरं गुट्ठपीड़ण भरोम्मुक्क फिक्कारं णिवट्ठओ एव्व दुट्ठ गओ । जाव अहंवि पिट्ठदो होमि ।

इति निष्क्रान्तः ।

सर्व्वाः । हं णअणपहं अदिक्कन्दा एदे ।

---

(४६) सत्वरं बद्ध परिकरो निष्क्रान्त इत्यत्र । बद्धः परिकरः दृढ़तर गात्रिका बन्धो येन स तथाभूतः सन् इत्यर्थः । भवेत् परिकरः सङ्घे-पर्य्यङ्क परिवारयोः प्रगाढ़ गात्रिका बन्धे इति मेदिनी ।

पुनर्नेपथ्ये ।

इह रमयन्तिका लंलति सोमसरः सलिले
इह तदन्तिकं झटिति धावति दन्तिवरः ।

सर्व्वाः । हथि हथि हा सहि रमअन्तिए ! कहं कम-
लिणी विअ कुञ्जरं इत्थगआसि ।

पुनर्नेपथ्ये ।

शिवशिव खाद काण्ड शतकोटिरिवाद्रितटे ।
निपतति मस्तकेऽस्य कलकण्ठ मृगाधिपतिः ॥ (४७)

सर्व्वाः । आकर्ण्य सविस्मयम् । साहु कलअण्ठ ! साहु ।

पुनर्नेपथ्ये । सहि रमअन्तिए ! मा मा भीरुआ होहि
दूरं णीदो एव्व कलअण्ठ कण्ठीरवेण दुट्ठगओ ।

सर्व्वाः । श्रुत्वा । एदं सारसिआए आसासण वअणं ।

कालिन्दी । सहि मल्लिए जीविद संसआदो मुक्कं
रमअन्तिअं आसा सह्म । इति निष्क्रान्ताः सर्वे ।

इति तृतीयोऽङ्कः ।

---

(४७) शिवशिव खाद काण्ड शत कोटिरिवाद्रि तटे इत्यत्। अद्रितटे खात् गगनात् अकाण्डे अकाले जातः शतकोटिः अशनिः सइव अथवा न विद्यते काण्डः कालः यस्य सोऽकाण्डः अजातकाल इत्यर्थः । तथाशी शतकोटिव अकाण्ड शतकोटिः आकस्मिकाशनिरित्यर्थः । सह इवेत्यु-पमा । अस्य गजस्य मस्तके कलकण्ठो मृगाधिपतिः सिंहइव कलकण्ठ मृगाधिपतिः निपतति अवितर्कितः कुतः प्राप्तवानिति भावः ।

इति तृतीयोऽङ्कः ।

## अथ चतुर्थोऽङ्कः ।

---

ततः प्रविशतो हस्तिपकौ ।

एकः । अहे वव्वलअ ! हि माण हे दंसपञ कठकुक्का-सुआहणाह अम्बलअ लाह अण वेक्किद दोरिअअदि खुड-क्कटे उअ मे । जं चंदओअलं अहाविअ ळ ण विवस्सळे लू वलं चविजिदल हिअअहे । माकुदि अणुकम्ता वलि अक्के दुअतस्स गूढ़मर्वाम्म पवट्टसहू । पेसिस विसदो णिम्गद अमे एक्के एव्व वअन्त अणुञ्जाणं वि विअं देवेसि देति चाल पुलिअा पसकिदं गुणिअओ अधदाणेण कुत्तआइ उम्मादणे मणे तु मं वि णि उत्तह्म । अविश्वयम् । तह णाम उम्मादिदे लोसामलि अपञ्जवसे मह वालणो तेण मह-पुलिसेण उम्माणादो झत्ति णिग्गदुआ लोलाणव्व आलूढे ढूलुलकन्ते विहुदु हअक्के दूल दूणं णीदे ।

ववेरकः । भीह मुह ! माहु भणिदं तुए णाह अम्ब-लआ हअहि णु उच्छिच्छिदे उअमेत्ति । होहिस्सी एअ अले क्लेसु विसम पुलिसेत्ति कधिदे लसो णाहिं ॥

जे कलेदिअ हि लाअ अयजे भजलं तहिअ णाहु वहुसु ।

सिंहमुखः । अह सोमसलं जि कअअंसो विधं धाविहोस्स तुह वालणास्सका अवत्था ।

ववेरकः । सेकुसलि लक्किलाविदो लिव्विसु सुलाअ उतं लमअन्तिअं घेणुआमो अत्तमज्झं पविढे ।

ततः प्रविशति मारुतो भ्रमरकश्च।

मारुतः। भ्रमरक! क्व नाम गच्छेत कुञ्जरकोलाहलोद्वेजिता मल्लिका?। अपि वसन्तोद्याने पुनर्दृश्यत एव।

भ्रमरकः। मम्म रमयंतिअं दट्ठुं सोमसरं गएन्ति।

मारुतः। युज्यत एतत्। तदादिशय सोमसरः सरणीम्।

भ्रमरकः। इदो इदो। उभौ परिक्रामतः।

मारुतः। सानुक्रोशम्।

अभिमुखपतयालुक्रूरमातङ्गमल्ल-
प्रतिभयकलहोद्वेपितायाः स्मरामि।
स्थितमतिदयनीयं द्रमशार्दूलकण्ठ-
स्खनचकितकुरङ्गीकातरप्रेक्षितायाः॥

आश्चर्यम—

सत्यं सहस्रगुणमुत्तपनात् अभूमा
कामानलो दहति गात्रमिदं तथापि।
तस्या घनस्तनभरार्पणलोभनीया-
दद्यापि नो गलति सा पुलकालिरङ्गात्॥

भ्रमरकः। णं णिम्मदोकिओ दूरणिरत्थो क्खु सो णाहेण पर्अंडो वे अंडो।

मारुतः। भ्रमरक! अपि सत्यं रमयन्तिकोपकण्ठं उपसर्पन् अपरः करी कलकण्ठेन निवर्त्तित इति।

भ्रमरकः। णाह! णं भणामि। णाहस्स पिट्ठदो अणुधावन्तेण मए दिट्ठो सोमसरकूडादो मणिजडपव्वअमूलकाणणमज्झं पविसन्तो सत्तुरधावन्त सिन्धुरकन्धरारूढ़ो णाहकलअंठोत्ति।

मारुतः। सवितर्कं। भ्रमरक!

द्रक्ष्यामि निष्ठुरकृतान्तमुखप्रपन्ना-
सा विश्रुराततनया प्रतिपालितेति।
दूये च दुर्म्मदमतङ्गजनीयमान-
माकर्ण्य काननगतं कलकण्ठमेकम्॥

भ्रमरकः। जाणन्तोवि पिअमित्तस्स भुअसोंडोरं कहं णाम खिज्जइ णाहो।

मारुतः। सत्यमात्थ।

अपि कुञ्जरकोटयःप्रभिन्नाः प्रभवन्ति चणमुद्भटं विसोढुं।
अपि कुण्ठपराक्रमस्य युद्धे कलकण्ठस्य कथं नु चण्डिमानं॥

तथापि

प्रत्यायते स यावत् तावत् खिन्दान एवास्मि
आशङ्कते ह्यपायानपदेऽपि स्नेहकातरं चेतः॥

ततः प्रविशति पथिकवेशधारी सब्रह्मचारिः शम्बरकशिष्यः कलपिङ्गकः।

कलपिङ्गकः। (मारुतं विलोक्य)।

सएष मारुतो गूढं यस्मै दुष्प्रत्यमेयधीः।
मल्लिकारल्लकाविद्धहृदयो मद्गुरुः स्वयं॥ (१)

सत्यमुक्तं सिंहमुखवर्ब्बरकाभ्यां वैसन्तोद्यानान्निर्गच्छन्दृष्ट इति।

मारुतः। हन्त।

इतस्ततः कण्टकविघ्नताङ्गो रजश्छटाकीर्णकरालजङ्घः।
परिस्खलन्नद्य परिश्रमेण प्रतिष्ठते कश्चन पान्थ एषः।

---

(१) रल्लकः सीमन्तः।

कलपिङ्गकः। सविषादं। हन्त निष्फलोऽस्मद्गुरोः कुञ्जरोन्मादनप्रयासः। भवतु उपायान्तरं प्रयोक्ष्ये (स-सम्भ्रममुपसर्पति)।

भ्रमरकः। सास्र! अम्मसुत्तलंच्छिअवच्छो दुम्मादो विम्र लक्खिज्जइ।

मारुतः। द्विजन्मन्! कुतस्त्वमध्वखिन्नः सम्भ्रमापन्न इव च लक्ष्यसे।

कलपिङ्गकः। आवेगं नाटयन्। क्षणमात्मानमवस्थाप्य सर्वमाख्यास्यामि। अद्यापि वेपते मे हृदयं। गजमयीरिव दिशः पश्यामि।

मारुतः। स्वगतं। हन्त अयमपि मतङ्गजादुद्वेजितस्तपस्वी। प्रकाशम्। भीरो! विस्रब्धं ब्रूहि। क्वाद्य कुञ्जरः।

कलपिङ्गकः। निश्वस्य। श्रूयतां।

आन्ध्रेष्वहं जनपदे हरदत्तनामा
गोदावरी परिसरस्थितिमान् द्विजोऽस्मि।
संसारपङ्कचकितः शिवमौलिमाल्ये
मन्दाकिनी पयसि गन्तुमनाः प्रयामि॥

मारुतः। दिष्ट्या तीर्थयात्रापान्थोऽसि।

कलपिङ्गः।

तत्कन्धरस्थितिरनङ्कुश एव कश्चि-
दाधोरणः कनककचम्पकगौरगात्रः।
पादाग्रघट्टनविमोटितकण्ठजाहः
कारुण्यवारिधि रचेष्टत तन्निरोद्धुम्।

मारुतः । जनान्तिकम् । गतः संशयः । ननु निरङ्कुशमपि मतङ्गजमनङ्कुशो नियमयत्येव कलकण्ठः ।

प्रकाशम् । ततस्ततः ।

कलपिङ्गकः । वाष्पं नाटयन् । मम नातः परं प्रसर्पति वाणी ।

मारुतः । साशङ्कं । कथय किं ततो वृत्तं ।

कलपिङ्गः ।

सोऽयं शैलेन्द्रसारोऽप्यचिह बलवता क्रोधनिर्धूतमूर्द्ना ।
प्रक्षिप्तोऽवाक् तदुर्व्यां ।

मारुतः । हा सखे कलकण्ठ ! कथं पतितोऽसि ?

प्रशिथिलवसन सम्भ्रमादुत्पतिष्णुः ।

मारुतः । सप्रत्याशं । ततस्ततः ।

कलपिङ्गः ।

आक्रान्तो दुर्म्मदेन द्रुतमिभपतिना हा सखे मारुतेति
क्रन्दन् व्यावेष्टमानो गतघृणममुना दन्तघातैरघानि ॥

मारुतः । सवाष्पाक्रन्दं । हा हा बन्धुजनेन्दो ! हा हा परिपन्थिशैल शतकोटे ! । हा हा मारुत जीवित ! हा हा कलकण्ठ ! किमिदमापतितं । इति मूर्च्छन् पतति ।

भ्रमरकः । सवाष्परुदितं । मारुतं धारयन् । हा णाह कलअण्ठ ! कहं णु तं तारिस परक्कमो पहसिअमहिंदस्स तुह करिकीड़ादो विणिवादो ।

कलपिङ्गः । सहर्षं । स्वगतं । फलितप्रायोऽस्मन्नीतिद्रुमः हा कष्टमप्रिया वेदकोऽस्मि । भद्र ! कथय कोऽयमीदृशव्यसनानुचितो महाभागः कश्च पुनरेतत् प्रेमास्पदं ।

मदद्न्तिकरकेलिकरः स महापुरुषः ।

भ्रमरकः। एसो महाप्पहाव वसीकिअसअल भूमण्डलस्स अमच्चवड्ढदत्तस्स कुमारो मारुओ । सोअ एदस्स पिअ मित्तं कलअंठो णाम ।

कलपिङ्गः । मिथ्याविषादं नाटयति ।

मारुतः । चक्षुरुन्मील्य । सखे कलकण्ठ ! किं एकपदे एव मां परित्यजसि । निश्वस्य ।

हा हन्त निर्म्मलसुधाकर विम्बवक्त्रं
आजानुलम्बिभुजदण्डमवद्यशून्यं ।
गात्रं कथं नु तव वज्रकठोरधार
वेतण्डदन्तमुसल पतिपात्र मासीत् ।

कलपिङ्गः । दुःसहानि खलु सुहृद्विपत्ति व्यसनानि ।

मारुतः ।

नोल्लिप्ता यशसा दिशो न गुरवः शुश्रूषया तोषिता
न प्राप्तस्त्र ऋणत्रयापहतये पुण्यो गृहस्थाश्रमः । (२)
नो वा पूरितमर्थिनामभिमतं न श्लोकथापि श्रुता
हा हा निष्करुणेन दग्धविधिना नीतोऽस्यकाण्डे सखे !॥

भ्रमरकः । हन्त पऊढमत्तो एव्व पारिजादपोदओ खुडिओ अमुणि अपड्डणेण मुक्कणिग्घादेण ।

मारुतः । सगद्गदं ।

(३) किमालम्बं धैर्य्यं भवतु ननु शून्या सुजनता

(२) ऋणत्रयस्य । देवर्षि पितॄणां ऋणस्य अपहृतये परिहाराय ।
(३) किमालम्बेति । सम्प्रति त्वद्गमनात् उत्तमाः सर्वेऽपि गुणा-

निराधारा नीतिः प्रियवचनमेकान्तविरतम् ।
विनष्टो विस्रम्भः शमितमखिलं बान्धवतपः
कथामात्रा सत्ता मम हि कलकण्ठ ! त्वयि गते ॥

तदलं निरर्थकैः परिदेवितैः कियद् विलम्ब्यते । यावन्मणिकूटमुपेत्य भृगुपातेन प्रियसुहृदः पन्थानमनुगच्छामि । भ्रमरक ! याहि नीयतामस्मन्नगरमेव स्कन्धावारः ॥ (४)

भ्रमरकः । सविषादं । किं एदं अज्ज आरद्धं । चरणयोर्निपत्य । णाह ! परित्ताअदु२ । सराअ अंसवन्धुवग्गं सराअ उत्त मण्डलं सगअ तुरअ पदातिकं सअलं विकुन्तललोअं । जइ तुमं एक्को जीविस्सिसि ।

मारुतः । स्मयवदन एव विहस्य ।

---

नष्टा इत्याह । किमालम्बमिति । हे कलकण्ठः ! त्वयि गते नष्टे सति इत्यर्थः । कथामात्रां सत्तामहह कलकण्ठ इति पाठान्तरं । तत्र कथामात्रां वचनमात्रां मतु प्रत्यक्षत्वेन सत्तां सद्भावं गते सति इत्यन्वयः । नाम मात्रेण भूवत्तिनीति भावः । धैर्य्यं धैर्य्याख्य गुण इत्यर्थः । किं आलम्बं यस्य तत् किमालम्बं यदवलम्बि इत्यर्थः । भवतु स्यात् इति प्रश्ने । भूधातोः कर्त्तरि परस्मैपदात् संप्रश्नार्थे लोट् ननु अये सुजनता सज्जनस्य समूहः शून्या नास्ति भूता । नीतिः निराधारा प्रियवचनं मनोहरभाषितं किम्बा प्रियः मित्रमिति वचनमित्यर्थः । एकान्तेन नियमेन अपरिहार्यत्वेनेत्यर्थः विरतं अवसितं विस्रम्भः विश्वासः विनष्टः अखिलं बान्धवतपः शमितं तद्व्यतिरिक्तस्यैव ततपः फलस्याऽभावादिति भावः । मम सत्ताहि सद्भावस्तु कथामात्रा तिष्ठामीत्ये तद्वचनमात्रका त्वां विना जीवामीत्यपवादमात्रफलकेति भावः ।

(४) स्कन्धावारः सेनेत्यर्थः ।

यो दुःखितेन दुःखी सुखितेन सुखी मयानुपाद्यं
तत्र यशःशेषतनौ सख्यौ जीवन् न जिह्रेमि।

कलपिङ्कः। सानन्दं स्वगतं। नियतमुपरममेत्येव एषः। अहो मे आकाशवाणी प्रयोगकोविदस्य सर्वङ्कषो मतिप्रकर्षः। तथाहि।

(५) भ्रूक्षेपविभ्रमनियोजितसैन्यचक्र-
नासीरवीरशकलीकृतशात्रवस्य।
एतस्य विक्रमनिधेर्विनिपातनेऽस्मिन्
सेयं मम प्रभवति स्वयमूर्ज्जिताधीः॥

तदमुना उदन्तेन यावदस्मत् गुरुमामन्त्रयामि। विमृश्य। अथवा अनेनैव पथिकवेषेण अमुमेव मारुतोपरमं सोमसरस्तीरवासिन्या मल्लिकाया निवेदयामि। येन अस्मामिर्वृत्तानुरागा स्वयमेव मद्गुरूद्वाहमनुमंस्यते। विश्वावसुना तु कात्यायनी वचनैक प्रमाणेन प्रतिपन्नमेवैतत्।

भ्रमरकः। कलपिङ्कं प्रति। तुह्मे निवारेह। अह्माणं पाहस्स अदिदारुणं आरम्भं।

कलपिङ्कः। भद्र! एवमनुरक्तस्यास्य महापुरुषस्य दुर्निवारोऽयमध्यवसायः। न चमे चेतादृशानि द्रष्टुं। तदहं मार्गीदनशनो ह्यसोढः क्षणविलम्बमपि यास्यामि। इति निष्क्रान्तः।

---

(५) भ्रूक्षेपेत्यादौ। भ्रूक्षेपविभ्रमेण नियोजितं यत् सैन्यचक्रं सेनासमूहः तस्य नासीरे पुरोभागे विद्यमानाः ये वीराः तैः शकलीकृतशात्रवस्य ध्वस्तपरिपन्थिन इत्यर्थः। सैन्याग्रभागे नासीर इत्यभिधानम् अत्र नासीरपदस्य वशंकरीरादिवद्विशेषमात्रपरत्वम्।

भ्रमरकः । स्वगतं । अदि णिसंसो विअ एसो पडि-भादि । प्रकाशं । णाह ! तह णाम अणुरत्तहिअआ वि कहं उवेक्खिज्जदि ।

मारुतः । मुग्ध !

त्यजतासूनपि येन स्नेहार्द्रेणाहमाहृतः ।
तेन वियुक्तस्याद्य मल्लिकया जीवितेन वा किं मे ।

ततः प्रविशति कलकण्ठः ।

कलकण्ठः । सानुरागं ।

आन्त्यास्तु ताननविलोलविलोचनश्री-
विष्वग्विकीर्णकमलोत्पलमम्बुमध्ये ।
तस्याः पयः कणकरम्बितमुग्धगण्ड-
मद्यापि मुञ्चति न मानसमाननं तत् ॥

यावदहं दूरनिरस्तहस्तिनं प्रियसुहृदं वसन्तवनसविधेऽन्विष्यामि । परिक्रामन् विलोक्य । सविषादाशङ्कं । एषः ।

वाष्पायमाणनयनविनिवेदितशोकभारः
चरणनिपतितेन भ्रमरकेण सप्रार्थनं किमपि निवार्य्यते ।

उपसर्पति ।

भ्रमरकः । णाह ! जइ एव्वं पुढमं एव्व भिउम्मि पडिस्सदि सअलो वि खन्धावारो ।

कलकण्ठः । सभयविषादं । किं प्रथममेव भृगौ पतिष्यति स्कन्धावार इति ।

मारुतः । आत्मगतमेव । ऊर्द्ध्वमवलोक्य । सखे ! कथं मामवमत्य गच्छन् स्वच्छन्दतोद्यमान् न विलज्जितोऽसि ।

कलकण्ठः । हन्त ! जीवन्तमेव मामन्यथा सम्भावयति प्रियवयस्यः ।

मारुतः ।

त्वरां विलम्बस्व गजेन्द्रगामिन् !
जवादहं यावदनुव्रजामि ।

कलकण्ठः । शान्तं पापं शान्तं पापं प्रतिहतममङ्गलं ! त्वरितमुपसृत्य । वयस्य ! किमिदमस्थान एव सकलमहीमण्डलमण्डनमात्मानममङ्गलेन ननु वचसा योजयसि ।

मारुतः । हन्त ! कलकण्ठस्य स्वरोऽयं ।

भ्रमरकः । विलोक्य । णाह ! दिट्ठिआ वड्ढासो पच्चाठाओ एसो णाह कलकण्ठो ।

मारुतः । सहर्षगद्गदं । एह्येहि सखे कलकण्ठ ! देहि कण्ठग्रहं मम पुनर्न प्रभवतो बाष्पायमाणे द्रष्टुं विलोचने ।

कलकण्ठः । सस्नेहमालिङ्ग्य । वयस्य ! किमेतद् वर्त्तते ।

भ्रमरकः । णाह ! गोदावरीतीरवासो त्ति कोवि पहिओ आगदुअ तह कहिदवन्तो कुञ्जर उत्तंतं । जेण णाहो वि भिउपडणंमि सज्जिओ ।

कलकण्ठः । विहस्य । मन्ये कुह न निद्रा शम्बरकान्ते वासिना कलपिङ्गकेन विप्रलब्धः प्रियवयस्यः । दुह्यति चास्मभ्यं मल्लिकार्थी शम्बरकपशुः ।

नेपथ्ये । हा सअलजीअलोअणाणन्माण फलमहाभाअ कहं तुइ अणुरत्तं परिच्चइ असण्णविलासिणी लोलुवो सि ता जाव ओहसिअ कुसुमाउहगव्वं तुमं अच्छारओ अप्पन्नसंणणअंति दाव झत्ति आगदुअ अहं णिवारेमि ।

सर्वे आकर्णयन्ति ।

मारुतः । साकूतं ।

नादः स एष मृगशावविलोचनायाः
चेतो विकर्षति विलोलयते धृतिं मे ।
व्याधेषु विद्धनिजवल्लभतीव्रशोक
विप्लुष्टबालकुररीरवमुग्धतारः ॥

कलकण्ठः । मन्ये मल्लिकामप्यमूमुहत् मुसलयः कलपिङ्गकः यावदेनां चरितमभ्यवपद्यामहे । सजवमुपसर्पन्ति ।

भ्रमरकः । णाह ! एसो तत्तहोदीए सीमन्त परिब्भुट्ठो दिप्पइ सिहामणि ।

मारुतः । मन्ये मतङ्गजभयव्याकुलाया गमनसम्भ्रमच्युतेनानेन भवितव्यं ।

उद्धृत्य सस्नेहं ।

नन्वद्भुतो नताङ्ग्या श्चिकुरे जलदे यथा तडित्पुञ्जः ।
सम्प्रति शोच्योऽसि मणे ! तस्याश्चूडापदात्परिभ्रष्टः ॥

पुनर्नेपथ्ये । कालिन्दि ! धारेहि धारेहि मुज्झन्तिणिपड़इ पिअसही मल्लिआ ।

सर्वे आकर्ण्य त्वरितमुपसर्पन्ति ।

ततः प्रविशति नवमालिका कालिन्दीभ्यां धार्य्यमाणा मूर्च्छानिमीलिताक्षी मल्लिका सम्भ्रान्ताश्च रमयन्तिका मधुकरिका शारदिकाः ।

रम । सविषादं । हद्धि ! णिप्फन्दा अज्जवि पिअसही मल्लिआ ।

नवमालिका । सवाष्पं । कधं किदे रुदिस्सामो किं महाभाअस्स उद मल्लिआए ।

सर्वाः। हा मल्लिए! तुमं वि किं महाभाअं अणुगच्छसि।

सार। कालिन्दि! कहिं णु पव्भट्ठो मुच्छाहरो सीमन्तमणी॥

नवमालिका। हा मल्लिआ! हिअअ वल्लह! महाभाअ मारुअ! धारेहि। तुह किदे मुच्छागअं णं।

मारुतः। सम्भ्रममुपसृत्य। नवमालिके! अयमहं धारयामि।

सर्वाः। विलोक्य। सानन्दं। पिअं णो पिअं णो अक्खदशरीरो पच्चागदो महाभाओ।

नवमालिका। सहर्षगद्गदं। महाभाअ! हरिषपारवसेण पज्जाउला ण किंवि सक्कुणोमि भणिदुं। धारेहि। जीविदसंसअं पत्तं पिअसहीं मल्लिअं।

मारुतः। सविषादानुरागं धारयति।

रम। अपवार्य। महुअरिए! सो एसो पच्चक्ख वम्महो महाभाओ मारुदो। जो मह जीविदप्पदाणमहोवआरोणं तस्स पिअसही। सरिसो क्खु मल्लिआए एदस्सिं पणअवन्धो। दिट्ठिआ असच्चाणि तस्स पहिअहदअस्स वअणाणि।

मधुकरिका। सहि रमअन्तिए! सो किल दुट्ठहिअओ सविआरिदं पुणो पुणो पेक्खिदवन्तो।

रमयन्तिका। चिट्ठदु तस्स हदासस्स पसङ्गो।

कालिन्दी। सहि पवुज्झस्स पवुज्झस्स।

कप्पन्ददोहाउ संपेच्छ महाभाअं।

मल्लिका। प्रत्यागच्छति।

मारुतः। सानन्दं। नवमालिके मा मा रुदिहि। प्रवुध्यते तव प्रियसखी।

कृष्णस्निग्धकनीनिके विकसतः कर्णान्तदीर्घे दृशा-
वुत्कम्पो हृदयस्य वेपितकुचा भोगः शनैः शाम्यति ।
धत्ते शीतरुचोविधुन्तुदमुखान्मुक्तस्य लक्ष्मीमिदं
मुग्धाक्ष्या विगलद्विमोहतिमिरं वक्त्रं प्रसीदत्क्रमात् ।

मल्लिका । सर्वाङ्गसुखमभिनीय । सहिओ कीं अस्सु अप्पवाहे पडिअह्मि । अहवा मुआ गदुअ तेण महाभाएण सग्गे सङ्गअह्मि ।

नवमालिका । सहि मल्लिए ! णहि णहि सम्मं एत्थ सीमसरत्थलं च्छिअलच्छीविलासप्पासादे महाभाअस्स वच्छठ्ठले पाडिआसि ।

मल्लिका । सहर्षं विलोक्य । महाभाअ ! दिट्ठिआ तुमं पुणोवि पेच्छामि । अवि सच्चं जीवसि ।

मारुतः । अपवार्य । सम्प्रति जीवाम्येव त्वयि नामैवं प्रसन्नायां । नोचेदनङ्गवह्निज्वालादग्धस्य कात्र जीवकथा ।

कलकण्ठः । उपसर्पति ।

रमयन्तिका । सहर्षं । महुअरिए ! दिट्ठिआ पत्तो कलअण्ठोवि ।

मधुकरिका । दिट्ठिआ एदस्स अमङ्गलाइं ण कहिआइं तेण णिसंसेण असहा अणाहविज्जं । तुएवि मल्लिआए विअ एदं मुच्छा वसणं होज्ज ।

कलकण्ठः । अपि भवत्योऽपि तेन पथिकवेषधारिणा शस्वरकान्तिवासिना वञ्चिताः स्थ ।

सर्वाः । किमहो ! किं सम्बरअणिक्को हदासो कहिअं तेण गोदाणई तीरवह्मणो वाराणसी पहिओ अह्मि ।

सारसि। जनान्तिकम्। कालिन्दि! जं भणिदं मए एदस्स वि अरभबगवरी सरो आश्वासवाणिं अणुहरइत्ति।

मारुतः। स्वगतं। उपकृतमपकर्त्रापि तेन कलविङ्ककेन।

श्रुत्वा मिथ्यामद्विपत्तिच्छिद्दासो
त्यक्ता शङ्कं जीवितं कातराक्ष्याः।
मुक्ताव्याजं प्रेमसर्वस्वमस्या
विस्रम्भाणां स्थानमभ्यर्चितं यत्।

नेपथ्ये। भो भो भुजस्तम्भसंस्तम्भितप्रतिभटकुम्भीघटाः सेनाभटाः! अन्वेषयन्तु मणिकूटकटकेषु वसन्तवनोपकण्ठेषु सोमसरःकूलोपपल्येषु स्वामिनं परिपन्थि गजकेशरिणं कुमारमारुतं समराणंव मन्दरचण्डदोर्दण्डकलकण्ठं च। अजानकावेव सोमसरस्तीरे भ्रमरकमात्रपरिजनौ वर्त्तेते किल तत्कालप्रभिन्नमदरोषामर्षद्रुपसर्पाभ्यां कुञ्जराभ्यां। सर्वे आकर्णयन्ति।

कालिन्दी। विलोक्य। अम्महे एसो पअलंतकुलाअल सहस्स सारिच्छभीसणगअ घड़ाणि रुद्ध पुरोभाओवग्गन्ततुरअ खुरपुटतालुद्दलिअ धरित्तितलचलिअ धूलीधूसरिअ दिसामुहो एत्तो मुहो आगदो एव्व महत्तो सकलणिवहो।

मारुतः। भ्रमरक! गच्छ निवार्य्यतां मा मा सम्भ्रमः कार्य्य इति।

भ्रमरकः। जं णाहो आणवेदित्ति निष्क्रान्तः।

मअमालिका। अह सो भमरअ वअणोदिअ णाहवअण सेलाणि रुम्भप्पसरो तहीं चिट्ठिओ सेणासाअरो।

मल्लिका। जनान्तिकम्। अम्महे एत्तिअस्स सेणाचक्कस्स

णाहो वि महकिदे एक्को एव्व ठिओ महाभाओ सअललो-अमण्डण भूदोमयं अस्स कुञ्जरस्स अभिमुहं धाविओ ।

नवमालिका । सहि ! एव्वं ठिए वि तुए णं सुट्ठु अनुट्ठिज्जइ । जं अप्पणेव्व अप्पाणं । णस मप्पेइ ।

मल्लिका । निःश्वस्य । सहि किं करोमि । ताद वस-वट्टिणि । तादेण पडिस्सादं किल राअसहिहह्मि । मल्लि-आए वरणिस्सए णाहं पमाणं । अपितु भअवदी कच्चाइ-णीएव्वेत्ति ।

प्रविश्य प्रतिहारी कनकलता ।

णोमालिए दुस्सहसोअदुमिअ हिअआ भट्टिणि-आणवेदि भट्टिदारिआभत्ति घरं आणेदव्वेत्ति पडिपालइ वसन्तवणविरन्ते सअल परिअण परिउदो कच्छोरहो ।

नवमालिका । सायङ्क । कणअलए । कीस दुस्सहसोअ-दुम्मिआ भट्टिणी ।

कनकलता । सविषादं । णं भअवदीए गोरीए अदिट्ठो अमच्चो भट्टिदारिआए सम्बरओ करोत्ति ।

मल्लिकामारुतौ विषादं नाटयतः ।

सार । जनान्तिकम् । मह्रु अरिए ! अमणोरमं आरद्ध सम्बन्धेण जो परोप्पर सरिसाणुराआइमे अडुढे विहडइ ।

मारुतः । सनिर्वेदं । स्वगतं ।

एतस्याः प्रथमावलोक समये गाढं प्ररूढः क्रमात्
संवृद्धोद्गत पल्लवः कुसुमितोमन्ये फलिष्यन्नपि ।
सोऽयं हन्त मनोरथ द्रुरधुना शाखोपशाखाञ्चितः
कष्टं हन्त कृतान्त वज्रसमहादम्भोलिना भज्यते ॥

मल्लिका। स्वगतं। हा मल्लिए! एत्तिअ मेत्तजीविअ फलासि। अह अम्ब गोरि! कहं रक्खसहत्थे दिस्सं ह्मि।

मारुतः। मल्लिकावदनं विलोक्य। स्वगतं।

मातर्भवानि! मयि दारुण दुःखदूने
मा नाम चित्तमनुतापपरिप्लुतं भूत्।
एनां विषण्णवदनामवलोकयन्त्याः
किं ते कृपाश्रुलुलितैर्न विलोचनैस्तैः॥

कनकलता। सोमालिए! अदंसणेण अहिअं किलम्मदि भट्टिणि। ता झत्ति भट्ठिदारिअं घेत्तूण गच्छह्म।

नवमल्लिका। सविषादं। इद्दो इद्दो भट्टिदारिआ।

मल्लिका। सबाष्पगद्गदं। अप्पणअणाभिराम महाभाअ आपुच्छदि मरणे असरणा मन्दभाइणी मल्लिआ।

नवमालिका। भअवदि! अम्बिए णादि जलहिअ-आसि। कहं तुह चरणोकालम्बणा मल्लिआ जीविद संसअं आरो विज्जइ। अहवा ण एव्वं विहो तुह आदेसो एदं वि तस्स सम्वरसिस्ससुखसुणं तक्केमि।

सार। जनान्तिकं। कालिन्दि! सच्चं णिहिदं सोमालिआए।

कनकलता। इद्दो इद्दो।

मल्लिका। स्वगतं। हा मल्लिए! एत्तिअमेत्त जीविद-फलासि। भअवदि गोरि कहीं रक्खसहत्थे दिस्सह्मि।
नवमालिकया सह निष्क्रामति।

रम। सारसिए! कहंवि मल्लिअं अणुगच्छामि। ण सक्कुणोमि आपुच्छिदुं जीविददाणमहोवआरिणं महाभाअं णं।

सार। महाभाअ! एसा तुए दिस्सं सरीरं धारअन्ती घरं गच्छइ रमअन्तिआ।

कलकण्ठः। सन्तु गृह्याः परिष्कृताः।

कालिन्दी। सारसिए! पेक्ख पेक्ख हिअउब्भरंतस्मह भाविविरहवेअणाणुसन्धाणविसेसवड्ढान्त मअणाणलब्भमंणविसेसदीहर णीसासं उद्दामविब्भमोल्लसिअ मालिआ कलिअ कडक्ख पेक्खिदणअणाराअ सव्वसससम्वग्गिअ सोअ सलिलपत्त परोप्परप्पोडिअ बिंबलंगघगाढपरिरम्भ सहुब्भिस्स पुलअजालरमणिज्जं रमअन्तिआ कलअण्ठाणं अवठ्ठाणं।

कलकण्ठः। सानुरागं। स्वगतं।

प्रणय चपलाः प्रेमस्फाराः प्रसूतमनोभुवः
स्थगितधृतयश्चेतश्चौराश्चलाचलतारकाः।
शिव शिव मयि प्रेङ्खन्त्यस्यास्तरङ्गित घूर्णित-
स्तिमितमधुरस्निग्धा मुग्धा विलोचनविभ्रमाः ॥(६)

मधुकरिका। इदो इदो।

---

(६) प्रणयचपला इति तरङ्गिताश्च घूर्णिताश्च स्तिमिताश्च मधुराश्च स्निग्धाश्च इति द्वन्द्वः तथा मुग्धाः अतएव प्रणय चपलाः प्रेमस्फाराः प्रसूत मनोभुवः स्थगितधृतयः चेतश्चौराः चलाचल तारकाः अस्या विलोचन विभ्रमाः मयि प्रेङ्खन्ति शिवशिव इति हर्षे। अत्र तरङ्गितत्वादि मुग्धत्वान्तानां सप्तानां विशेषणानां प्रणयचपलत्वादि चलाचलतारकत्वान्तेषु सप्तसु विशेषणेषु क्रमेण हेतुत्वं बोध्यं तरङ्गितादि लक्षणं तु प्रथमाङ्के निरूपितमस्माभिः।

रमयन्तिका । अपवार्य । महुअरिए ! कदा पुणोवि पेक्खिस्सं पुस्सचन्दसुन्दरं महाभाअं ।

मधुकरिका । सहि अमग्गो । इदराओ सम्बरअ पक्ख वदिति संकीअदि । अवि अगहा सुलहं क्खु दंसणं भण्णंवि ।

रमयन्तिका । निःश्वस्य । कथं कथमपि निष्क्रामंति ।

मल्लिका । णोमालिए ! इन्दीवर दुल्लह दंसणं कसणंत-दीहर विसाल लोअणपुण्डरीअं पुणोपेक्खिस्सं महा-भाअस्स मुहचन्द मण्डलं । इति विवलित मुखी सवन्ध पश्यति ।

सारसिका । कालिन्दि ! पेच्छ सकरुणाणुराअ णिवट्टिअ मुहचन्दाए मल्लिआए वाहहर पूर पूरि आइ तुसारकरकरं विअं कमलकलिआ मित्ताइ णेत्ताइ । ता अम्महे गदुअ आसासणिज्जा ।

कालिन्दी । महाभाअ ! एव्वं ट्ठिएण पहवन्ति चलणा फ'त्तदुं वि ।

मारुतः । अनुसर्त्तव्या भवतीभ्यां मल्लिका ।

कालिन्दी । महाभाअ ! एदंवि वाराणसी पहिअ वअणादो अदिरित्तं मण्णेहि ।

सारसिआ वि भणइ अम्हवि आआसवाणीए विअसरोत्ति ।

कालिन्दी । सारसिके ! अपि श्रुतं त्वया आकाशभाषितं ।

सारसिका । अहइ ।

कालिन्दी । स्वगतं । युज्यत एतत् । एतादृशानि तत्रास्य दुर्नयविलसितानि ।

मारुतः । स्वगतं । आश्वासनानि खलु एतानि । प्रकाशं ।

कालिन्दि! सएष मल्लिकायाः सीमन्तलालितो मणिः ।

इत्यर्पयति ।

कालिन्दी । आदाय । हन्त असेसिदोवि एसोण दिट्ठो अम्हेहिं । निष्क्रान्तः ।

मारुतः । निःश्वस्य । हन्त अदृष्टपारे व्यसनसागरे पतितोऽस्मि ।

(७)मूर्च्छा स्वेच्छं स्फुरन्तु यातु वपुरिषुभिः पूर्णकामः सकामो
भूयादाधिः समिद्धोरणरणिकपरिस्फूर्त्तिरूर्जस्वलास्तु ।
वैधुर्य्यं वर्द्धतां द्राक् द्रवतु धृतिरपध्वंसतां सौख्यचिन्ता
हन्तासौ तुल्यरागं जनमसुलभयन्नस्तु धाता कृतार्थः ॥

कलकण्ठः । सखे! युवयोर्मल्लिका मारुतयोरनुरूपं पाणिग्रहणमङ्गलं सर्वमङ्गलानसं मन्यत इति कथमेतत् सङ्गच्छेत । पश्य

मूर्त्तौ युवां प्रसादीयस्याःपरिवस्यया प्रसन्नायाः । (८)
तद्वचनोपघ्नमिमं प्रत्यूहन्नेव विश्वसिमः ॥

मारुतः । कलकण्ठ! विचित्रेषु कर्म्मणां विपाकेषु कथं नाम विश्वसनीयमेतत् । पश्य

शुभमितरद्वा प्राचरं कर्म्मसुखं दोग्धि दुःखं वा ।
दैवं पुनस्तटस्थं तदु भय मनुभाव यदुदास्ते ॥

---

(७) मूर्च्छेति । रणरणिकपरिस्फूर्त्तिः उत्कण्ठापरिस्फुरणम् इत्यर्थः । ऊर्जस्वला स्थिरतरेत्यर्थः यातु खण्डयतु इत्यर्थः ।

(८) परिवस्यया पूजया तद्वचनं सर्वमङ्गला वाक्यं उपघ्ना आश्रयस्थानं प्रमाणमिति यावत् । यस्य तं प्रत्यूहं विघ्नं इत्यर्थः । प्रसन्नया प्रत्यूहा सन्ति रविश्वसनीयेति भावः ।

कलकण्ठः। कथमेवं भाषसे प्रत्यक्ष एव कलपिङ्गक वृत्तान्तो वयस्यस्य।

मारुतः। विचिन्त्य। हन्त संशये स्थापितोऽस्मि। स्वगतं किमत्र कर्त्तव्यं। सावष्टम्भम्।

प्रणतजनपारिजातवल्लीं भवानीं प्रसादयिष्यामि।
गत्वा गौरिगृहानिको मोक्ष्ये वा निष्फला नसून्।
आराध्य देवीं शर्व्वाणीं लप्स्ये वा मल्लिकां प्रियाम्॥

प्रकाशं। सखे कलकण्ठ! तवापि हृदयमनुप्रविष्टेव रम यन्तिका।

कलकण्ठः। सलज्जस्मितं। सत्यमुपलक्षितं वयस्येन।

उद्भिन्नबाष्पकणिकानुपगूढभावान्
उत्कण्ठितान् मयि मुहुः क्षिपती कटाक्षान्।
सेयं नितम्बभरमन्थरमन्दयाना
यान्ती गृहानपि सखे! हृदयं गता मे॥

मारुतः। कलकण्ठ कथमेनां जिघृक्ष माणएव मदकरिणिखादवप्लुतोऽसि।

कलकण्ठः। अहं खलु भ्रमरकमात्र परिजनं वसन्त वनगतं वयस्यमुपसृत्य त्वरितमुपगच्छन्मध्ये सरणि सन्निहितया सारसिकया सोमसरः कूलं नीतोऽस्मि।

मारुतः। ततस्ततः।

कलकण्ठः। ततश्च

स्नातोत्थिता सलिलविन्दुतरङ्गिताङ्गी
सा सुन्दरी तटगते मयि दत्तदृष्टिः।

संसक्तसूक्ष्म विमलाम्बरलोभनीय
श्रोणीभरा मनसि मे लिखिता स्मरेण ॥

मारुतः । सखे ! हृदयङ्गमानि खलु तरुणि मणिलय-समुल्लिखितानि नितम्बिनीनामङ्गकानि विशेषतः स्वालोत्थितानाम् ।

कलकण्ठः । ततश्च तत्कालाढौकितस्य मदेभस्य झटित्यारूढपादपः स्कन्धदेश मास्कन्दितवानस्मि ।

मारुतः । सहर्षं । सखे ! सिद्धमेवाभिलषितं मन्यस्व । पश्य

तद्रूपविभ्रमविवर्त्तितरागवृत्तिः
प्रागप्यसौ तव वयस्यकरं गतेव ।
अद्य प्रसह्य चिकुराग्रविसारिहस्ता-
दुन्मोचिता किमुत दुष्टमतङ्गजेन्द्रात् ॥

कलकण्ठः । वयस्य ! अस्याः पुनरग्रतो रुद्रातनामा शम्बरकपक्षपातीति सन्दिह्यते ।

मारुतः । किमेतावता ।

समहृदयौ चेत्तरुणौ किं प्रतिकूलेन बन्धुवर्गेण ।
अनुकूलेनापि पुनर्नार्थस्तौ चेद्विरागौस्तः ॥

तद्यामः शिविरं । इति निष्क्रान्ताः सर्वे ।

इति चतुर्थोऽङ्कः ।

## पञ्चमोऽङ्कः ।

ततः प्रविशति विप्रवेषधारी राक्षसः ।

अहो अतिमनोहरं अकुतोभयं अस्मत्कुलचरित्रं ।
निर्वर्त्त्यन्ते नृमांसैर्निरणनिधयः पीयते रक्तसीधुः
स्वेच्छासम्भोगसौख्यं भवति हठहृतैरन्यदारैरुदारैः ।
वैतानीनां क्रियाणां विमथनमधिकं जायते हृष्टहृद्भिर्
केन स्वच्छन्दहृद्यं न भवति तदिदं राक्षसं जन्म तुष्ट्यै ॥

मया पुनरति श्रोत्रोऽस्मज्जाति विरुद्धोऽप्ययं वेषः सिंहलद्वीपवासिनः सख्यु र्विकटग्रीवस्य कृते समभ्युपगतः। आदिष्टोऽस्मि हि प्रियसखेन। सखे खड्गजिह्व! सन्ति मे त्वयापि दृष्टानि त्रीणि विशिष्टानि वस्तूनि। एकं सकलमूर्च्छाहरं रत्नं अपरं चित्रमयं कन्यारत्नं। अन्यद्विमलं दिव्याम्बरञ्चेति। पतितानि च तानि प्रमादेन लङ्कापुरगमनसम्भ्रमाकुलेन मया मन्निवास एव वटमूले कथितञ्च लङ्कापुरवास्तव्यैः दैवज्ञैरेतद्वस्तुत्रयनाशादर्वागब्दीय एव ममायुरिति। अतस्तदन्वेषणाय त्वया प्रयतनीयमिति। सहर्षं। दृष्टञ्च विप्रवेषधरेणान्विष्यता मया तदस्मिन्नेव कुसुमपुरे। सविस्मयं। अहो या सा तादृश सौन्दर्य्यनियन्त्रित सकललोकलोचना चित्रकन्या। यस्य दुकूलाञ्चललिखितो मरकतभङ्गकविस्तरणः। ताविह स्यातेव स्तः। विहस्य। मोष्टागावपि तावेव। विकटं परिक्रामति। पुरतो विलोक्य। कोऽयं सायं सन्ध्यावतारविरलसञ्चारमप्यन्धकारं मेदुरयन्नभ्रं कषस्तमालप्रायो महानारामः। निर्वर्ण्य। मन्ये

कुसुमपुरोपकण्ठवासिन्याः कात्यायन्या विहाराक्रीडोऽयं । यः शर्वरीषु तत्कालसन्निधानसकलपरिवारमण्डलो मनुजदुष्प्रवेश इति श्रूयते । तथाहि

क्रीडन्ति प्रमथार्भकास्तत इतो मूलेषु पृथ्वीरुहां
श्रूयन्ते घनगर्जित प्रतिभटा हैरम्बकण्ठारवाः ।
दूरादेव पुरद्विपैः परिहृताः सन्त्रास फीत्कारिभिः
वान्त्येतेऽपि च गौरिकेसरि सटा संघट्टिनो मारुताः ॥

चायह्नं । तदस्माकं दुरुपसर्पोऽयं देशः । निसर्गदेशे खल्वसुरराजवंशेषु मायाविनो वसुदेवनन्दनस्य सोदरी असोसामान्यप्रभावा दुर्गाः । तथाहि—

एषा विषाणकोटिव्यस्तमहेन्द्रोपवाह्यस्य ।
अविषह्यमहिषस्य शिरः श्रितवत्यमुग्धे न चरणेन
अथवा । कातरजनप्रशंसा गोचरोऽस्या विक्रमः ।
प्रागस्तहंशजातः स किल दशमुखोद्गागुदानेष्टदोष्णां
स्थेमानं सन्दिदृक्षुः चटचटिति समुत्पाट्य कैलासमद्रिम् ।
किं ब्रूमस्तामवस्थां प्रचलति शिखरे भीवरन्तहंसन्त
नत्वा श्लिष्यत् स्वदोर्भ्यां पुरमथनमियं चाटुवादामपेतम् ॥

मार्गान्तरेण परिक्रामति । सकौतुकं कोऽयमभिनवारूढयौवनारम्भो मजकुमारमन्थरसञ्चारः प्रविविचत्यविशङ्कमेनं दुर्गायतनारामं । यएषः ।

गवडुशिलारुचिः प्रवरविपाण्डुरगण्डतलः
पृथुभुजदण्डमण्डलकरालकृपाणलतः ।
नयनविलोभनोऽपि च विभर्त्ति भयङ्करतां
विटपनिषण्णमेचकफणीव पटीरतरुः ॥

निवर्त्त्य । अये ! सोऽयमस्मद्दुकूलाञ्चललिखितस्तरुणः । यस्याम्बरे सा चित्रकन्या । साग्रहं ।

दूरादेव तमस्यपि धाम्ना स्वेनैव लक्ष्यमाणवपुः ।
मन्ये दुरासदोऽयं मृगपतिरिव यौवनोद्भिन्नः ।

तन्मन्ये दृश्यैव एतत्सहवर्त्तिनी चित्रकन्या । अथवा । सत्यां सत्यकन्यायां किं चित्रकन्यया । तद्यावन्मणिकूटशिखरागतस्य सख्युर्विकटग्रीवस्य सर्वमिमं वृत्तान्तमावेद्य स्वेच्छं गच्छामि । नभो विलोक्य । अस्तत् सञ्चरणोचितस्यायं समयः ।

(८) यदिह नवनवास्रग्धोरणीदिग्धमांस-
प्रचयमिव नभोऽन्ते साध्यमैधिष्ट तेजः ।
तदखिलमति दृप्तैर्यातुधानैरिवैतैः
समसमयमघासि ध्वाङ्क्षवृत्त्या तमोभिः ।

इति निष्क्रान्तः । शुद्धविष्कम्भः ।

---

(८) यदिहेति । इह पूर्वोक्तसमये नभोऽन्ते गगनान्तराले नवनवास्रग्धोरणी दिग्धमांसप्रचयमिव स्थितमित्युत्प्रेक्षा । अत्र नो द्वितीयचक्षिकत्वनिरासगर्भं नवनवेति पदम् ।

द्वितीय चक्षिकत्वे हि आद्यप्रभङ्ग इति भावः । असाध्यम् अपरिमितं यत् तेज ऐधिष्ट ववृधे । अखिलं समस्तं तत् पूर्वोक्तविशेषणविशिष्टं तेजः कर्म अतिदृप्तैः यातुधानैरिव अतिदुर्मदराक्षसैरिव स्थितैः इत्युत्प्रेक्षा ।

एतैः पुरोदृश्यैर्भिः तमोभिः कर्त्तृभिः समः समयः यस्मिन् कर्मणि तद्यथा भवति तथा समसमयम् एककाले इत्यर्थः ध्वाङ्क्षवृत्त्या वायसवृत्त्या काकभोजनप्रकारेणेति भावः अघासि कवलितमित्यर्थः ।

ततः प्रविशति यथानिर्दिष्टो मारुतः ।

मारुतः । साशङ्कं ।

याः पालीश्यामकृतकघनप्रेमविस्फारितानां
सव्रीडानां सकलकरुणानन्दनाडिन्धमानां ।
तेषां तेषां हृदयनिहिताकूतनिष्यन्दिनेत्र-
व्यापाराणां पुनरपि तथा सुभ्रुवो विभ्रमाणां ॥

हन्त पुनरिदमेव स्मारं स्मारं प्रतिमार्ट हृदयं ।

अन्येन पाणिमवलम्ब्य जिघृक्षमाण-
मन्तर्विभिन्नहृदया सदयं प्रयान्ती ।
वक्त्रं तदिन्दुमधुरं परिवृत्य भूयो
बाष्पाकुलेक्षणमवैक्षत यन्मृगाक्षी ॥

पुनः साश्रसं ।

तदङ्गमपि नाम तत्सहजकान्तिपूराप्लुतं
सुवर्णकदलीदलोद्दलितगर्भगौरवं पुनः ।
कठोरमदनव्यथापिशुनपाण्डिमाधिष्ठित
प्रथिमकुचमण्डलं परिरभेय वीक्षेयवा ॥ (१०)

---

यद्वा यत् असाध्यं तेजः तेजोरूपं भवनवासिघ्नोरणी दिग्धमांस-
प्रचयं कर्त्तुं इह तेजो निशाऽभेदप्रतियोगित्वं विशेषणविधिष्टमांस-
प्रचयस्येति रूपकम् । नभोऽन्ते ऐधिष्टेव अवर्द्धतेवेत्युत्प्रेक्षा ।
अखिलं तत् कर्म पूर्वोक्तमांसप्रचयमित्यर्थः अतिदम्नैः एतैः तमोभिः
तमोरूपैः यातुधानैः अत्रापि तमोनिष्ठाभेदप्रतियोगित्वं यातुधाना-
नामिति रूपकम् । समस्तमयं धाक्कृत्या अधायि इवेत्युत्प्रेक्षा इति
योजना ।

(१०) परिरभेय आलिङ्गेय वा अथवा परिरम्भाभावे इत्यर्थः

अपि भूय एवैतत्।

आसीनः स इत स्थितः प्रचलितः स्वप्नायितो जाग्रविः
यक्षन्मीलितलोचनोऽथवश्चन्मौनं प्रपन्नोऽथवा।
तां प्रेमाकुलवीचितां स्मितमुखीं सव्रीडमन्दागमां
स्निह्यन्तीं प्रणयार्द्रमुग्धलपितां पश्यामि नक्तन्दिवम्॥

अग्रतो विलोक्य। सहर्षं।

कुरवकचम्पककेसरतमालहिन्तालमण्डलाकीर्णं।
अपहसितनन्दनवमन्तदिदं कात्यायनी गृहोपवनम्॥

मानुषवं। एतत् खलु निमि निमि साचाद्भवत् सर्वेषु पर्वतेन्द्रतया मनुजैः दिवसैकगम्यमिति श्रूयते।

नेपथ्ये। कलकलः।

मारुतः। विलोक्य सविस्मयानन्दं। अहो! अहं पूर्विकाप्रणमनावर्जितमणिकिरीटपरस्परसंघट्टस्रस्तस्वस्तबकुसुमापीडैर्निविड़ितं मृडानी भवनमुपर्युपर्यम्बरमापतद्भिरमृताशोभिः। निर्वर्ण्य सकौतुकं।

अवतरति विचित्रदर्शनोऽयं
विकसितनेत्रपरम्परो विड़ौजाः।
कमलवनहतो मदद्विशीर्णो
नभस इवामरसैन्धवः प्रवाहः॥

सवहुमानं।

त्रैलोक्यं भूविधेयं वलिजिदवरजः सेवितारो निलिम्पाः

---

योऽन्येय इत्युभयत्र चंप्रम् लिङ् प्रार्थनायां वा योषयमाणेऽप्रमभिति भावः। अभिलाष विप्रलम्भः शृङ्गारः।

सन्त्वत्र सप्ततन्तु स्तुतिरसिततमवाग्गीष्पतिः स्वस्तिवादः ।
स्वर्णाद्रिः सद्मवापीगगनसरिदहो निष्कुटः कल्पवाटः
पौलोमी नेत्रपेयं वपुरिह किमिति श्लाघ्यता नो मघोनः ॥

अन्यतो विलोक्य । कोऽयं तडिदालोक इव प्रतिहन्ति
नयनरश्मीनकिम्पचानप्रकाशः ।

विभाव्य । साधारणं क्रतु भुजां वदनं पुरस्त्री
सौभाग्यलोपि गिरिशस्य तृतीयमक्षि ।
तेजस्तिरस्कृततमस्वयमाविरस्ति
स्वाहातपः फलमुषर्बुध एव साक्षात् ॥ (११)

सस्मितं । मन्ये एतद्दर्शनादीषदुन्मीषितमन्दाक्षं स्मरिष्यति स्मरदाहस्य हरमहिषी । अन्यतो विलोक्य । अयमिह भीषणोज्ज्वलाकृतिः भगवान् मृडदेवः ।

प्रादुर्भवद्दुरितहतात्मनां जनानां
प्रायश्चित्त्युपकृतये प्रयुक्तदण्डः ।
देवस्य प्रियतनयः सरोजबन्धोः
केन स्यात् पितृपतिरेष नो नमस्यः ।

---

(११) साधारणमिति । क्रतुभुजां साधारणं वदनम् । अग्निमुखा वै देवा इत्युक्तेरिति भावः । पुरस्त्रीसौभाग्यलोपि त्रिपुरदाहेन तत्स्त्रीणां वैधव्यदानादिति भावः । गिरिशस्य तृतीयं अक्षि शङ्करभाललोचनस्य वह्निमयत्वादिति भावः तिरस्कृततमस्वयं परिहृतध्वान्तसंघं इत्यर्थः स्वाहा तपःफलं स्वाहादेव्या स्तपःपरिणामभूतमित्यर्थः तेजः उषर्बुधः वैश्वानर एव साक्षात् प्रत्यक्षतः आविरस्ति । इह क्लीवलिङ्गमपि वह्नेः तेजसो विशेषणं तच्च उषर्बुधस्येति बोध्यम् ।

विहस्य। हन्त अदसीयस्योपवाह्यस्याकस्मिकोऽयं सम्भ्रमः। तथाहि।

नमस्तुभ्यं मातर्महिषमथनीति प्रणमतां
गिरो गीर्वाणानां भयचकितमाकर्ण्य परितः।
निरुद्धोऽपि स्वीयैर्जवधुतविषाणः प्रतिभयो-
द्घाताद् कुर्वन् घण्टां द्रवति महिषो दक्षिणदिशं॥

अन्यतः चक्षुषी चारयन् साशङ्कं।

विकटवदनो विद्युत्पुञ्जप्रकाशशिरोरुहो।
धृतनरशिरोमालस्तालप्रमाण महाभुजः।
ज्वलननयनः शालप्रांशुस्तुतोऽपि भयङ्करः।
क इह गगनाभोगात् दीप्यतवा तरद्विकः॥

विमृश्य।

मन्ये स एष रक्षःपतिः निर्ऋतिः यो दिक्पालपङ्क्तिनिविष्टः पठ्यते।

विहस्य। अहो महत्सौहार्दमस्मिन्निम्बिकापरिवर्गस्य।

प्रत्युद्गच्छन्त्यग्रे स्निह्यन्ति स्वागतानि पृच्छन्ति
कथयन्त्यवसरमुचितं प्राप्तेऽस्मिन्निर्ऋताविह प्रमथाः।

स्पर्शसुखमनुभूय। कथमिदं शीतलकृदमन्दमिवाच्छनमङ्गं विलोक्य।

मधुराननो धृतहारकुण्डलो
नयनं धिनोति सलिलाधिपतिः।
परिपूर्णशीतकरविम्बधरः
नभसोऽवकाश इव तारकितः॥

अहो इतरतेजः परिभावुकमेतस्य तेजः।

अथवा। नाद्भुतमिदं यदन्यत् न्यग्भावयति प्रचेतसस्तेजः। इदमध्युषितामाशां प्राप्य च निर्वान्ति येन तेजांसि।

अन्यतोऽवलोकयन् सौरभातिशयं विभाव्य।

क एष तावत् सकलेन्द्रियतर्पणेन परिमलेन लिम्पतीव प्रपञ्चं। निर्वर्ण्य।

कृत्स्नं येन श्वसिति भुवनं मित्रवान् वीतिहोत्रः
लब्धाहारं फणधरकुलं शम्भुरन्यूनमूर्त्तिः।
सोऽयं चूड़ाकलितसुमनःशेखरोच्छिन्नमाध्वी
लुभ्यद्भृङ्गी निनदमुखरं गन्धवाहः समेति॥ (१२)

ससम्भ्रममिव। कथमेतद्दर्शनेन किमप्युत्सुकमिव हृदयं। हृष्यति हृषीकमस्मिन् स्वात्ममतिर्जायते च किमिदं मे वचितं। (१३)

अथवा समान नाम्नां सङ्के स्यादेकत्रधीर्यथा पयसोः।

कथमप्यन्यतश्चक्षुरासज्य। कोयमकपिङ्गलाभ्यां सन्निधत्ते समग्र भूषणमणिप्रभाशकलितशार्वरान्धकारोन्मेषः पुरुषोऽधः विभाव्य।

---

(१२) कृत्स्नं येन श्वसितीत्यस्मिन् पद्ये मित्रवान् प्रशस्तमित्रः भूम निन्दा प्रशंसास्वित्यादिना प्रशंसायां मतुप्। अन्यूनमूर्तिः परिपूर्त्तमूर्त्तिः अष्टमूर्तित्वादिति भावः।

(१३) अथवा पक्षान्तरे इत्यर्थः समाननाम्नां एकाभिधेयानां सङ्के ऐक्यधी एकत्वबुद्धिःस्यात्। दृष्टान्तमाह पयसोः पयश्च पयश्च पयसी तयोः यथा क्षीर नीरयोरिवेत्यर्थः दुग्धोदकयोर्मेलने यथैकत्वबुद्धिःस्यात् तद्वदेकनाम्नोर्मेलनेऽपीतिभावः।

अस्तोकसम्पदलकापुरसार्वभौमः
स्वर्णोर्मिभूत्तटनिवेशितचन्द्रचूडः।
यत्राधिराज्यकमलातडिदम्बुवाहो
दिक्पालमौलिमणिरेष विलिप्त एषः॥

सप्रश्रय हर्षं। अहो अवाङ्मनस गोचरं मम सौभाग्यं
तथाहि।

देवोऽप्येष पुरान्तको नयनयोरध्वानमाढौकते
दूरादेव सुरैर्विमुक्तसरणिर्दुग्धेन्दुकुन्दच्छविः।
उत्तुङ्गकलसद्दीपवाह्यवृषभस्कन्धानुवृत्तिस्खल-
च्चूडावल्गितसिद्धसिन्धुलहरीझाङ्कारकोलाहलम्॥

सम्प्रति हि।

नाथे समेयुषि समीपमुपोढहर्षं (१४)
उत्थाय देव्यपि कुचस्खलितोत्तरीया।
प्रायः ससम्भ्रमतया करदत्तहस्ता
प्रत्युद्गमिष्यति शनैः कतिचित् पदानि॥

पुनर्विलोकयन्। अति मनोहरं वर्त्तते।

गन्धर्वसिद्धसुरकिन्नरसुन्दरीणां
आसामुदारनयनैर्वदनारविन्दैः।

---

(१४) नाथे समेयुषि इत्यस्मिन् पद्ये करं दत्तहस्ता कराय दत्तो हस्तो ययेति विग्रहः। स्वनाथस्य दत्तहस्तादानाय प्रसारित निजहस्ता सतीति भावः। यद्वा सख्या इति शेषः करे दत्तो हस्तो ययेति विग्रहः सख्या दत्तहस्ता इति यावत्।

सञ्जायतेऽद्य परितः परिपूर्य्यमाणं
सम्पूर्णचन्द्रशतदन्तुरमम्बरोघं ॥
यावदेनां प्रणमामि

इष्टानिष्टापादकच्छेदकेभ्यःशक्रादिभ्यो दिक्पतिभ्यो नमोऽस्तु।
सर्व्वैरेतैः सर्व्वदोपासितायै देव्यै भूयः शैलपुत्र्यै नमोऽस्तु ॥

इति प्रणम्य अङ्गमवलोक्य । हन्त शून्यमेव गगनतलं ।
न सुरा नाशापतयो नाप्सरसो नो विमानानि ।

पुनरपि तदेव केवलमवशिष्टं भीषणं तिमिरं ।
मन्ये निवर्त्ति त शर्व्वाणिदर्शनैर्गतमेव गीर्व्वाणैः ॥

सहर्षं ।

अत मम पक्तिमाणि प्राक्तनप्रायस्तपांसि सम्यञ्चि ।
देवोऽपि सार्द्धममरैर्येन प्रत्यक्षितस्त्र्यक्षः ॥

तत् इदानीं अवसरो मम सर्व्वमङ्गलाचरणमूलोपसर्पणस्य । यावदुपसर्प्पामि । परिक्रामन् । साशङ्कं । अपि नाम प्रसीदेदम्बिका ।

उपचितघनरागो रागकल्पव्रतत्याः ।
प्रसभमखिलविघ्नध्वान्तसङ्घस्य हन्त्र्या ।
कमलमिव करेण प्रातरर्को नलिन्याः ।
कुवलयनयनायाः किन्नु पाणिं ग्रहीष्ये ॥

अग्रतोविलोक्य । इदमुपवनद्वारं यावत् प्रविशामि ।
प्रवेशं नाटयन् । स्खलनमभिनीय । सनिर्व्वेदं

कथमिदमविषमेऽपि स्थले स्खलितचरणः । अथवा इहैव स्थित्वा प्रसादयिष्यामि देवीं । कृताञ्जलिः ।

कलहिषि गतत्विषि द्रविणराजि हाहाकृति
प्रचेतसि विचेतसि त्रिनयने त्रपामीलने ।
सुरद्रुहि रणाद्रुहि त्रिभुवनद्रुहो मस्तकं
ममर्द महिषस्य यत्तदिह नौमि देव्याः पदम् ॥ आकाशे लक्ष्यं ।

केलीरावोऽथरंसीच्च किल विजयया सार्द्धमावध्यमानो
नाकृष्टा दृष्टिपाताः किल विजयजुषश्चन्द्रचूडस्य वक्त्रात् ।
उत्क्षिप्ते पादपद्मे किलमणिकटको नोच्चकैर्वा शिशिञ्जे ।
मातः शैलेन्द्रकन्ये ! महिषविमथनं नाम कोऽयं विलासः ॥

निमित्तं सूचयित्वा ।

दुर्लभे प्रियतमापरिरम्भे स्पन्दसे किमिति दक्षिणबाहो ! ।
हन्त वेत्सि न गिरं गगनोत्थां मल्लिका विघटनैक-
कठोराम् । निःश्वस्य । आकाशे ।

तत्ताद्दृशं युवतिरत्नमदृष्टमूल्यं
दुष्प्रापमल्पसुकृतस्य ममेति युक्तं ।
त्वद्वाक्यमत्र किल यत्र जनित्वमूलं
तत् किं तवाम्ब ! सदृशं करुणार्द्रतायाः ॥

अथवा स्वकर्माधीन सुखदुःखः किमित्युपालभे देवीं
मतद्दहां कात्यायनीं ।

अतः प्रियतमालाभनिःसम्बलजीवन स्तोषयिष्यामि
स्वयमुपहृतैरहं कुसुमैराराध्याम् । पुनराकाशे ।

पश्याम्बिके प्रणतकामितकल्पवल्लि
सा मल्लिका प्रियतमा यदि दुर्लभा स्यात् ।
अस्तु स्वहस्त करवाल विदूनकण्ठं
वक्त्रं ममाद्य पदयो स्तव रक्तपद्मं ॥ इति कौक्षेयकमुत्क्षिप्य समार्थयन्नं ।

अस्तु ममभक्तिरतुला त्वत्पदयोर्देवि पद्मपाटलयोः ।
अपि च जननान्तरे वा प्रेयस्या सङ्गमोऽस्तु मल्लिकया ।

इति खड्गं कण्ठे न्यस्यति। आकाशे हा णाह मारुअ! परित्ताअसु परित्ताअसु कहं ण पेक्खसि मं रक्खसहत्थगअं णं तुए पुढमं वि कुञ्जरहत्थादो रक्खिदह्मि। हा अम्ब गोरि! सच्चं रक्खस हत्थे दिसंह्मि। हा ताद! हा अम्ब! एसा हदिह्मि तुह्माणं गोरिप्पसादलद्ध एक्कउत्ती मल्लिआ।

हा माद्धिव्विसे मे भअवदि एषा तुहअब्भ मसमीविण णीदह्मि।

जाएसिणीहे ण हिमगिरिं उज्झिअ आगआसि।

हा सहि णोमालिए! हा कालिन्दि! दुल्लहं इदोवरं तुह्माणं दंसणं।

मारुतः। ससम्भ्रमाकूतं। खड्गं कण्ठादपनयन्।

कथमयं गगनगोचरः करुण करुणो मल्लिकायाः स्वरः।

सविषाद वितर्कं।

किम्प्रासाद शिरःस्थिता जलधरै नीता तडित्शङ्कया
किंवा मण्डयितुं दिवं सह सुरैराखण्डलेनोद्धृता।
अहोस्वित् शशिनः कला निपतिते धात्रा स्वयं शम्भुना
केन व्योमनि भीरुरार्त्तकुररी तारस्वरं क्रन्दति॥

ऊर्द्धमवलोक्य। हन्त महान् प्रमादः।

कोऽप्येष व्योम्नि घोरश्चयइव तमसां भीमदंष्ट्राकरालं
विभ्राणोवक्त्रमुग्र भ्रूकुटि पृथुशिराः पिङ्गलश्मश्रुकेशः।
व्यक्तं नक्तं चरो द्राक् द्रवति हहधिक् दैवमास्याङ्कदेशात्
प्रभ्रष्टा वेपमाना पतति तडिदिवाम्भोधरात् मल्लिकेयम्॥

सवाष्पं। हा! निष्करुणता विधातुः।

या सोपानपथादपि प्रियसखीहस्तैरहम्पूर्व्विका
दत्तां हस्तपरम्परामवतरत्यालम्बमाना शनैः।
सेयं भङ्गुरमध्यमापतति हा! तुङ्गान्नभः शृङ्गतो
मत्तैरावत लोलितेव नलिनी मन्दाकिनी पाथसः॥

यावदेनां धारयामि। खड्गं निधाय प्रसारितोत्तानकरस्तिष्ठति।

ततः प्रविशति मारुतहस्तगता वेपमानाङ्गी मल्लिका।

मल्लिका। हा! पड़ि अह्मि।

मारुतः। सवाष्पं। महाभागे! मा भैषीः।

चेतः समुच्छ्वसतु शाम्यतु वेपथुस्ते
नातः परं निशिचराद्भयमन्यतो वा।
नन्वस्य मे परिजनस्य वराङ्गि! हस्त-
पर्य्यङ्कदेशमकुतोभयमागतासि॥

मल्लिका। सहसा विलोक्य। अह्म हे महाभाओ हा महाभाअ! इति कण्ठमालिङ्गय।

मारुतः। महाभागे! किमेतत्।

मल्लिका। सुचिरं निश्वस्य सलज्जं। आआसवासो पासा-
सादो दुल्लहं महाभाअ चलणसिस्सूसणं मसन्ती अज्ज
णिसीहे णोमालिअं विवज्जिअण मरणकिअणिच्चआ भव-
णुज्जाणं गएव्व तक्खणागएण। सभयं। केणवि रक्खसेण
झत्ति घेत्तूण गअणमग्गेण आगदुअ अज्ज तुह हत्थे
पाड़िदह्मि।

मारुतः। सोच्छ्वासं।

दिष्ट्या बन्धुजनप्रिये मम क्षते श्लाघ्यानसून् नाभुवः
दिष्ट्या ते कुणपाग्निना नवसुधा हृद्यं न लुप्तं वपुः ।
दिष्ट्या तस्य करच्युतासि गगनात्तूर्णं पतन्ती पुनः
दिष्ट्या चम्पकमालिकेव दयिते प्राप्तासि वक्षो मम ॥

मल्लिका । तुज्झ ण्ण देव्वादुईग्गा कहं एत्थ सण्णिहिदा ।

मारुतः ।

सोऽहञ्च सुन्दरि ! शिरः कमलार्चनेन ।
त्वामेव लब्धुमभिरोद्धुमना भवानीं । कण्ठे हस्तेन प्रदर्शयन् ।
तमेनमधिषिस्व करेण खड्गं ।

मल्लिका । ससम्भ्रमं । महाभाअ मामा साहसमणुचिट्ठेहि । इति हस्तं रुणद्धि ।

मारुतः । सस्मितं ।

आक्रन्दितेन तव भीरु ! निवारितोऽस्मि

मल्लिका । स्वगतं । हन्त अदीदो उत्तन्दो एव्व वण्णिदो । सकरुणानुरागं । अम्महे मह किदे पाणपरिच्चाए विवसिदो महाभाओ । नेपथ्ये । आः को नाम नृपशुर्मदुत्सङ्गवर्त्तिनी मच्चूचुरम्मनुजकन्यां अद्य सा न दृश्यत एवाङ्कदेशे यामहमेकोत्पाते सिंहलद्वीपं नेतु कामोऽस्मि । उभावाकर्ण्ययतः ।

मारुतः । विहस्य । हन्त देवीप्रभावेण मत्करपतितां नाज्ञासीदेव मूर्खो राक्षसः ।

मल्लिका । सभयं । हद्धि ! पुणोवि णि वट्टइ रक्खसी वेपते ।

मारुतः । विहस्य । महाभागे ! मा भैषीः । क्षणमत्र पादपान्तरिता तिष्ठ । तदहमेनं निहन्मि दुष्टराक्षसं ।

मल्लिका। कहं महाकाएण रक्खसेण सङ्गच्छदु ताओ।

मारुतः। विहस्य। भीरु! किं महाकाय इति।

तीव्रोष्णादुर्विषवीर्य्यभृतः परेषां
तेजस्विनो न गणयन्ति वपुर्महत्त्वं।
यत्पद्मरागशकलाकृतिरद्रितुङ्गं
कान्तारमत्र न भस्मयति काष्ठचयं स्फुलिङ्गः॥

मल्लिका। सभया पादपान्तरिता तिष्ठति।

मारुतः। खड्गमुद्गृह्य सावष्टम्भं मास्ते।

ततः प्रविशति गवेषयं
नाटयन् यथोद्दिष्टः समम्भ्रमो राक्षसः।

सोऽहं सिंहलदेशकाननपतिर्य्यस्यायतो नामतः
मृत्युः कम्पितकूटशाल्मलिरपि स्थातुं न च क्षमते।
तस्यैवाद्रितटस्थितस्य विकटग्रीवस्य रक्षःपते
रक्षस्यां मम कन्यकामपहरन् किं नो गतायुर्नरः॥

मल्लिका। सभयं। अम्मो हे एदिणा भअङ्करसरीरेण
कहं एअ कुवलअदलकोमलस्स महाभाअस्स सङ्गमो होदु।

मारुतः। दृष्ट्वा सविस्मयं। अहो एतस्य वपुः प्रकर्षः।

उदग्रीवैः परमोच्चितव्यमचलाभोगं शिरोभ्रूषणं
विन्ध्यप्रस्थविशालभीषणमुरस्तालोपमानौ भुजौ।
भूयः कम्पितभूतलश्चचरणान्यासस्तदेतद्वपुः
सर्गे प्राक् परमाणुतां गमितवान् मन्ये विधिः पर्वतान्॥

उग्रः। रे रे अमङ्गलस्पर्श!

कल्याणिनीं किसलयादपि कोमलाङ्गीं (१
शृङ्गारसागरसुधां स्मरजीवनाडीं ।
तामिन्दुविम्ववदनां स्पृशतः कथन्ते
क्रव्यादपाश शतधानपभालमूर्द्धा ॥

राक्षसः । मारुतं विलोक्य । सत्यमयमेव चोरः । सोपहासं ।
साधु रे परिस्पन्द ! साधु ।

कस्त्वं करालविषभीषण कालसर्प-
स्फारस्फटाफलकरत्नशिलाविशिष्टां ।
तां कन्यकामहह सत्वरमस्मदङ्क-
पर्य्यङ्कमध्यविधृतामसुधाविशङ्कं ॥

मारुतः । सक्रोधं । आः लोकविद्विष्टाचार ! कन्यका-
चोर ! भूयः किमेवं तव व्यवहारः । सावधीरणं ।

रे रे पापसखे प्रतीच्छसि कथं वालां पलाशाधमे-
च्छेवाज्याहुतिमाशु धाव चपल त्वं चेत् तवासि प्रियः ।
नो चेदेष करोमि खड्गदलितत्वत्कन्धरान्तःशिरा
नालश्च्युतकवोष्णरक्तलहरी मेदस्विनीं मेदिनीम् । (१६)

राक्षसः । सभ्रूभङ्गम् । आः ममापि विकटग्रीवस्य
पुरतस्तिष्ठन् मुक्तशङ्को विकत्थते च । निर्वर्ण्य सप्रत्यभिज्ञं

(१५) हे क्रव्यादपाश राक्षसापसद इत्यर्थः याप्येपाशप् इति कुत्-
सितार्थे पाशप् नपफालनविशीर्णं इत्यर्थः । त्रिफला विशरणे इति
धातोः परस्मैपदाल्लिट् ।

(१६) रे रे इतत्र्यस्मिन् पद्ये त्वं तव आत्मनः प्रियोऽसि चेत् भाग्
इवाज्येतत्रर्थः जीवितेच्छा चेत्तर्हि तिष्ठेति भावः ।

सक्रोधं। अयमेष मद्दुकूलाञ्चल लिखितस्तरुणः। यश्चिर कन्या चोर इति खड्गजिह्वेनोपदिष्टः। प्रकाशम्। मूढ! स्वजीवनिरपेक्ष! मनुष्यडिम्भ! दिष्ट्याऽऽगतस्त्वमिह तिष्ठतु नाम कन्या।

त्वामेव कोमलकलेवरमाम्रपेषं।
पिष्ट्वा पिबामि मधुरं रुधिरं यथेष्टं।

इति मारुतं स्कन्धे उद्धृत्य धारयति।

मल्लिका। सत्वरं पादपान्तराद्विनिर्गत्य साक्रन्दं। भद्द रक्खस! एषा तुह अञ्जली मुञ्च महाभाअं मं उण भक्खेहि।

राक्षसः। अनाकर्णितकेन निष्क्रान्तः।

मल्लिका। सबाष्पं। हन्त णीदो एव्व रक्खसेण महाभाओ। सकरुणं। हा सअललोअलोअण चंद! हा कंदप्प मणोहरंग! हा सज्जण चूडामणि! हा लच्छी विहारमंदिर! हा मल्लिआ हिअअ वल्लह! मारुअ! कहं णु दे सव्वलक्खण लक्खिओ तारिसो विग्गहो रक्खसाहारो आसि। हत्थि अहं एत्थ पापा मन्दभाइणी दे सव्वअणत्थस्स पुणो पुणो कारणह्मि। निःश्वस्य। निप्फलजणाए मरणं वि दुल्लहं एव्व आसी। अम्ब भअवदि विस्संभरे! देहि मे विवरं। दिशो विलोक्य। हन्त कालञ्जणं णीलणीरन्धे भुवणे कहं गच्छामि। कं सरणं अक्कन्दामि।

इति रोदिति। प्रविश्य ससम्भ्रमा मन्दाकिनी।

मन्दाकिनी। वत्से! माभैषीः।

मल्लिका। विलोक्य। सबाष्पं। अम्हहे भअवदी! भअवदि! परित्ताअसु परित्ताअसु। इति पादयोः पतति।

मन्दाकिनी । सकरुणमालिङ्ग्य ।

भद्राणि भीरु ! युवयोः सरसानुबन्धी
ज्ञानात्मकेन नयनेन मयैष सर्व्वः ।
रक्षांसि यान्तु विलयं विविधाश्च दोषाः
दैवं प्रसीदतुतमां शिवमस्तु भूयः ॥

अपि च ।

इतो हस्तगतो मारुत इति मास्म करोर्मनसि सन्तापं ।

विख्यात विक्रम विडम्बित फल्गुनस्य
रक्षांसि नो परिभवे प्रभवेयुरस्य ।
किं जृम्भमाण किरणस्य तिरस्क्रियायां
बालस्य वासरमणे रलमन्धकाराः ॥

नेपथ्ये । चटच्चटध्वनिः ।

मन्दाकिनी । विलोक्य सहर्षं । अज्ञातमारुतपराक्रमे ! अस्य महाभागस्य चण्डिमानं । एष खलु ।

स्कन्धे स्थितोऽस्य गतभीरसिना शितेन ।
छिन्ने शिरो विरटतः पिशिताशनस्य ।
दम्भोलिकोटिकठिनेन नखाङ्कुशेन
पञ्चाननः करिपते रिव कुम्भकूटं ॥

मल्लिका । सहर्षं । सभयं च पश्यति ।

मन्दाकिनी । सानन्दम् ।

अभिहतमस्तकः पतति वेपितभूमितलं ।
रजनिचरो गिरीन्द्र इव वज्रभिन्नतटः ।

सविस्मयं ।

इह हि कबन्धतोऽस्य धृतदिव्यवपुः पुरुषः

प्रचलित भूषणो झटिति कोऽपि समुत्पतित: ॥

सविस्मयानन्दं ।

मल्लिका। भअवदि ! अच्चेरं एदं अदिभीसणादो रक्खसादो दिव्व पुरुषो उट्ठिओत्ति। पेच्छ पेच्छ पदक्खिणी कदुअ सविणअकलिअंजलि पल्लविअ मोलिदेसो पणमदू अ महाभाअं।

मन्दाकिनी। देवयावभूतोऽयं मन्ये कोऽपि पुरुष: शापवशेन राक्षसत्वमापन्न इति।

नैपथ्ये। कलकल:। आकर्णयत:।

मल्लिका। सभयं। भअवदि ! रक्खसभयेण मसेमि पुणो वि रक्खसा आअच्छन्तित्ति।

मन्दाकिनी। विलोक्य। वत्से ! एते सबाष्पवदनं तातममात्य विश्वावसुं पुरस्कृत्य त्वदन्वेषिण: परिभ्रमन्त: सत्वरमितस्ततो गृहीतविविधायुधा वीरपुरुषा:। पुनर्नेपथ्ये। हा पुत्ति मल्लिके। नन्विन्द्रनीलालोकादपि तिमिर वुड्ढा विभेषि।

मल्लिका। सबाष्पं। हा तादो अ कन्दइ।

मन्दाकिनी। एहि वत्से ! त्वद्दर्शनशोकविह्वलं तातमाश्वास्य प्राणदान महोपकारिणं विजयिनं मारुतमपि सम्भावयाव:। इति निष्क्रान्ते।

इति पञ्चमोऽङ्कः।



अथ षष्ठोऽङ्कः ।

ततः प्रविशति काषायाम्बरयुगलहस्तः पुरुषः ।

पुरुषः । सहर्षं । अहो ! विहसिअ वहप्पइ णाअप्पहावलुहिज्जंत मल्लिआ करग्गहणा मङ्गलणिलाहणिज्जेणाह संवर अंभिमहंतो क्खु सिणेह वंधो विङ्गुराअ उत्तस कहराअस्स जेण अज्जसखिहिदविवाहसम्भाविअ मह्नाजण णिसम्बाहसञ्चारजोग्गो णिजहवणोक्कद्देसो विभज्जिअ दिस्सो । अविअ अज्झिअ णिच्चिन्दं वितंदविङ्गुराअं भगणअन्तो णिअसोअरीं रमअन्तिअं अज्जकलपिङ्गस्स दाउं पवट्टइ आ । विहस्य । सोमसर कूलदंसणं आरभिअ महन्तो क्खु अहिलासो अज्जकलपिङ्गस्स रमअन्ति अस्सि जेण साहिलासेहिं णअणं चलेहिं पुणो पुणो पेच्छइ । सअं एव्व असग्गे गदुअ किंवि किंवि संलवइ पोसेइ अणिअउअणेण वि अप्पणो मिच्छापदाणाइ । पुनर्विहस्य । सा उण विसम्भिअ परिहरदि एदस्य दंसणं । विमृश्य । जं होदि तं होदु । सव्वहा लहिस्सदि एव्व रमअन्तिअं अज्ज कलपिङ्गओवि । जेण अघडिअ घरणेक्क णिलाहणिज्जा मन्दाइणी आवज्जीअदि । णाह सम्बरएण तेहिं तेहिं सक्कारेहिं । जइ सा मसेइ कमलिणीं चन्दाणंवि परप्पराणुराअं उवभावेदि कुमुदिणीं वा चण्डअरेण संघडेइ । दिसंअ महहत्थे णाहेण अभिणवुम्मिसन्त कोअणाइपसवसस्स कोमलं एदं कसाअम्बरजुअलं

ताए एव्व दाव णाजाव बिवाहमङ्गलोवअरणव्वापुड़ं भअ-वदीं दट्ठुं एदं गोपुरणव्वकंचण सालभञ्जिआ पुञ्जप्पभा-बढ़िअ विज्जुज्जआ पिच्छिलं अमच्चवीसवसुमन्दिरं पवि-सामि। प्रवेशं नाटयित्वा पुरतो विलोक्य। एसा रमअन्तिआए पिअसही महुअरिआ इदो एव्व भवणादो आअच्छइ।

प्रविश्य मधुकरिका। सानन्दं स्वगतं। साहु अवि गोओ सम्ब-रअ वह्वणोवाओ दिट्ठो अणिअरसाहारण महप्पहावाए भअवदीए मन्दाअणीए। निःश्वस्य। सनिर्वेदं। हन्त सहजो कोवि सत्तू एव्व हद्दराओ पिअसहीए रमअन्तिआए जोमालिअं विअ मक्कडअस्स णं कलपिङ्गअस्स संघडअइ। सोच्छ्वासं। एदंवि उवदिट्ठो एव्व महकणोपिअ सहीए विअ जाणिद्व्वो वाओ भअवदीए। पुरुषं विलोक्य। अज्ज एक्कघरवासपरिअएण जाणीअदि। सम्बरअस्स परिअणो चवलओ णाम एसो।

पुरुषः। उपसृत्य। महुअरिए! अवि जाणीअदि कहिं भअवदि मन्दाइणी वट्टइत्ति।

मधुकरिका। स्वगतं। कीस एसो भअवदिं अस्सेसइ होदु पुच्छिस्सं दाव। प्रकाशं। चवलअ! कीस भयवदी।

चप। विहस्य। णं एसा इमस्स किए मुगधिन्दुसेहर विलासिणीए समुल्लसिअं आआसभासिदं ति णाह सम्ब-रअस्स सव्वओसम्भभट्टाणं वट्टइ।

मधुकरिका। स्वगतं। भअवदि णमो तुम्हाणं वंचण-प्पहावस्स।

चप। स्वगतं। कहूह्नं। रमअन्तिआवुत्तन्तं। प्रकाशं। अज्जविसेसदो दट्ठवा। जं रमअन्तिआ अणुजलइदव्वा सा क्खु अग्गएण वहुराएण दिस्स वि वामसीला णाणुमस्सइ कलपिङ्गअस्स परिणअं।

मधुकरिका। सोपहासं। स्वगतं। अज्जअं चरणताडणफलो भविस्सदि हदासस्स कलपिङ्गअस्स परिस्समो। प्रकाशं। चपलअ! ईसक्करं क्खु रमअन्तिआए अणुजलणं भअवदीए नेपथ्ये॥ नवमालिके किमिति विलम्बयते। भगवत्या देशको नाम समयः सुरभिमारुतागमनसुभगं लीलोद्यानं प्रविष्टायाः त्वदागमनं प्रतिपालयन्त्या मल्लिकायाः। तदयाहि विविक्ते सविशेषं मण्डयतां अद्य विवाहोचितैर्माङ्गलिकैर्भूषणैः। यावन्न परापतति सम्बन्धिवर्गः। उभावाकर्णयतः

मधुकरिका। स्वगतं। जुज्जइ मारुओ वि तहिंचिअ कलअण्ठभमरअसहाओ सारसिआए निउढं आणिओ वट्टइ ता अहं वि उइए संविहाणे पवट्टामि। प्रकाशं। चपलअ एहि कञ्चुइणो भअवदीए आदेशं ववहरन्ति। ता गच्छ समीवट्ठिआ। सुलहइंसणा एव्व भअवदी। इति निष्क्रान्तौ प्रवेशकः।

ततः प्रविशति मारुतः कलकण्ठो भ्रमरकश्च।

मारुतः। भ्रमरक! अपि सत्यं उपकण्ठवर्त्तिलतामण्डपमध्यास्ते मल्लिका।

भ्रमरकः। णाह! णं भणामि। कालिन्दि णोमालिआ हिं पारद्धमङ्गलमण्डणविहि चिट्ठन्ति।

माधवः । सोच्छ्वासं ।

(१७) आशंसाभिरहर्दिवं ह्यधिरुजा यल्लिप्सितं प्राक्मया-
नैराश्यं यदलाभकातरधिया प्राणेष्वपि प्रस्तुतं ।
हस्तप्राप्तमिवाद्य जीवितफलं तद्भाति न ज्ञायसे
मातस्त्वं भवितव्यते! कथमिव प्रादुर्भविष्णो पुनः ॥

---

(१७) आशंसाभिरिति । अहर्दिवं आशंसाभिः अप्राप्तस्य प्राप्तिच्छाभिः हेतुभिः अपि लभेय मीप्सितवस्तु इत्यपरिमिताभिराकाङ्क्षाभिरित्यर्थः । अधिरुजा तु अधिकरुजाऽपि इत्यर्थः । तु पादपूरणे भेदे समुच्चये ऽवधारणे इति मेदिनी । अनवरत चिन्तोत्थ मानस महाव्यथेनापि इति भावः । मया प्राक् यत् वस्तु लिप्सितं पुनरपि इच्छितं वाञ्छाहेतुक दुःसह मनोव्यथा सम्भवेऽपि न वाञ्छासन्त्यक्तेति भावः । तदपि हन्त तदन्तर शायिनी लगति चित्रमगीव मृगेक्षणेत्यादिना प्रागुक्त प्रकारेणेति बोध्यं । नच तावन्मात्रं अपितु शरीरत्यागे प्रावर्तिष्याह । प्राक् मयेति अत्रापि काकाक्षिन्यायाः दनुवर्त्यते । प्राक् मया यदलाभे यस्य वस्तुनोऽलाभे कातरा या धीः तया हेतुना । यद्वा यदलाभकातर धिया मया इत्यन्वयः । प्राणेष्वपि नैराश्यं निस्पृहत्वं प्रस्तुतं प्रस्ताव विषयीकृतं अनुष्ठितमिति यावत् । अपिच जन्मान्तरे वा प्रेयस्या सङ्गमोऽस्तु मल्लिकया इति खड्गं कण्ठे न्यस्यतीति प्रागुक्त प्रकारेणेति बोध्यं तत् जीवितफलं जीवितफलभूतवस्तु मल्लिकेत्यर्थः । अद्य हस्तप्राप्तमिव भाति । हे मातः ! जगदम्ब भवितव्यते ! भवितव्यता देवि ! पुनः भूयः कथमिव केन प्रकारेण प्रादुर्भविष्णो प्रादुर्भाव मेष्यन्तो इति न ज्ञायते न बुध्यते ज्ञा धातो रात्मने पदात् भावे लट् । न ज्ञायसे इति पाठे न बुध्यसे इत्यर्थः । कर्म्मणि लट् । साम्प्रतिकस्तव प्रादुर्भाव एव मत्वाञ्छितत्वेन परिणामवान् दृश्यते । किन्तु जगदम्बात्वेन अनियम्यायाः स्तव भूयो भविष्यन् प्रादुर्भावोऽनेवं विधैवं विधत्वाभ्यां संदिह्यत इति भावः । अत्र भावि-

कलकण्ठः । मा मा सन्दिहीष्ठाः । ननु ते हस्तप्राप्तमेव जीवित फलं भवान्याः प्रसादतः । यतः स्व कण्ठच्छेद साहस निःशङ्क प्रवृत्त एव हस्ते पातिता मल्लिका ।

भ्रमरकः । णाह एसो लदावलयन्तरेण लग्गामञ्च्व मग्गो ।

मारुतः । भ्रमरक! नीरन्ध्र पत्र पटल मांसललतापुञ्ज निरुद्धेऽपि प्रदेशे परिजनापातशङ्का दुःस्थित हृदयो न पारयामि प्रचलितुं ।

भ्रमरकः । णाह! भअवदीए आदेसेण वेत्तपाणीहिं

उज्जाणादो दूरणिरत्थीकदु परिअणो ।

मारुतः । सहर्षं । ननु सर्व्वथा प्रमादिनी भगवत्या नीतिः ।तदादेशय मार्गं ।

भ्रमरकः । इदोइदो । सर्व्वे परिक्रामन्ति ।

कलकण्ठः । विलोक्य । अहो सर्व्वतः प्रत्यासन्न परिणयमंगलपिशुनोदात्त परिष्करणममात्य विश्वावसोर्भवनम् । तथाहि ।

---

तव्यते इति पदस्य भवितव्यं कर्म तस्य भावः भवितव्यता इति व्यापार धर्मत्वेन अर्थकल्पन मयुक्तं तथात्वे संबुद्धे वैयर्थ्यात् किञ्च मातरिति विशेषणस्य असाङ्गत्यात् । तन्नामक देवतीर्थकत्वे तस्या अनियम्यत्वे च प्रमाणान्तु जातएष महाक्रूरः सर्वसंहारकारकः एतस्य मोहनार्थाय देहि भार्य्यां यथोचितां । एवं शिववचः श्रुत्वा स्वकं पृष्ठं ददर्शह ततो देवी समुत्पन्ना योच्यते भवितव्यता रूपलावण्य सम्पन्ना पीनोन्नतपयोधरा इत्यारभ्य ततः प्रीतात् सा प्राह देव्यग्रे प्रणता स्थिता ममाधीन मिदं विश्वं ब्रह्माविष्णु शिवात्मकं कालस्यायं ममाधीनः कोपि मां नच वेत्स्यति इत्यादीनि ।

(१८) दत्ता नूतनचित्र पङ्क्तिरमले प्रासाद भित्तिस्थले
बद्धा वन्दनमालिकास्तनदूतो द्वारेषु माध्वीमुचः ।
किञ्च क्षौमवितानमण्डलव्रात प्रालम्बमुक्तावली
शुम्भत्काञ्चनतायमानसुभगा वाह्याङ्गणक्षोणयः ॥

अपिच ।

आराद्दावांश्चलिन्दध्वजशिखरपटीपल्लवान् लोलयन्तो ।
वोढ़ारस्तोरणस्रक्कुसुम नवसुधा विप्रुषां गन्ध वाहाः ॥
कर्षन्तो वल्गुवल्गत् कुचभरमभितः कुङ्कुमोत्कर्षवेगा-
दुर्द्दर्शद्दोलितानां परिजन सुदृशां कङ्कणाक्कङ्कृतानि ॥

भ्रमरकः। कर्णं दत्त्वा। गाढ़! किं कङ्कणणादो एव्व केवलं

---

(१८) दत्ता नूतनचित्रेति । नूतनचित्र पङ्क्तिः अमले प्रासादभित्ति-स्थले दत्ता तथा द्वारेषु स्वालम्बि पुष्पमालासु माध्वीमुचः मकरन्द-स्राविण्यः वन्दनमालिकाः तोरणानि तत इतो नद्धा बद्धाः । वर्षे-वन्दनमालातु तोरणं परिकीर्त्तितं इति हलायुधः । तोरणं नाम तोरणोऽस्त्रीवहिर्द्वारमित्यमरोक्त्या वाह्यः प्रतीहार इति केचित् तत् न । तथात्वे प्राक् गृहवन्धन कालएव बद्धानां तोरणानां प्रकृत पद्ये तत इतो नद्धा इति सर्वत्रापि नवीन बद्धत्वोक्ते रसाङ्गत्यापत्तिः । अत एतदुक्तिवलात् यद्धि परस्परेण तिर्य्यक् बद्ध पुष्पमालादिकं स्तम्भद्वयं पार्श्वद्वये च संस्थाप्यते तत् वहिर्द्वारादिपदेरुच्यत इत्यन्येषां व्याख्यानमेव युक्तं प्रतीमः । किञ्च अपिच क्षौम वितानानां मण्डलेषु निवहेषु व्रता बद्धाः प्रालम्बमुक्तावल्यः ऋजु लम्बिमुक्ताहाराः ताभिः शुम्भन्ति भासमानानि (शुभ शुम्भ भासने इति धातोर्निष्पन्नं) हार प्रतिफलनेन परस्पर किरण सम्पर्केण चेति भावः । यानि काञ्चनानि तैः ताय-मानाः विस्तरीभवन्त्यः (तायृ सन्तानपालनयोरिति धातोर्निष्पन्नं) अतएव सुभगाः मनोहराः वाह्याङ्गण क्षोणयः सन्ति इति शेषः ।

कच्चिद्दो एसो हृदोतदोप धावन्तवार सुन्दरीणिअम्बविम्बलम्बि-मणिमेहलासहस्स झङ्कारसुहरोघोलन्त सम्मलं त्तउरज-णभूषणारवणिमज्जन्तमङ्गलमुअङ्ग सङ्काहलपणवणिस्सणो सखिच्छिदभूदेववग्गपरिज्जजन्त पुण्णपुण्णाहघोस मङ्गलो गेत्त-जर मण्डलाञ्चत्तरपित्तप्पव्वदू लच्छोपरिणओ । णञ्चण मङ्गल सङ्गीअ महुरा-हाम-वेस-वंहि बुंह वड्ढिम जणसह हैलीह-लामेदुरो महन्तो क्खु एसो उच्चव कोलाहलो ।

मारुतः । निश्वस्य । सखे कलकण्ठ ! ।

परिणयसमयं स्तन्वंग्रा यथा यथा भजति सान्निध्यं ।

संशय दोलारूढ़ं तथा तथा वेपते हृदयं ॥

भ्रमरकः । णाह आअदं ह्म लआभवणपेरंत्तं ।

मारुतः । सहर्षं । किमिदमेव मल्लिकाधिवाससुभगं लताभवनं ।

कलकण्ठः । ननु श्रूयते प्रसाधन समय सम्भाव्यः क्षणोत्पन्न विरतो भूषण झङ्कारः ।

भ्रमरकः । णाह ! एसा मङ्गल ह्णाणविसुद्धसुद्धपरिक्खाम पण्डुरंग सविसेस लोहणिज्जदंसणा । णोमालिआ णिव्व-ट्टिअ विवाहणेवच्छमहुगेदाररमणिज्जवेसा एत्थ लआन्द-रेण । लज्जाए लच्छि विअ सक्खा लक्खिज्जइ तत्तहोदो ।

कलकण्ठः । पत्रजालान्तरेण विलोक्य । एषा खल्विह वलितमुखी कालिन्दी नवमालिकाभ्यां किमपि संलपति ।
तदिह लतान्तरेण प्रविश्य गूढं पश्यामः । तथा कुर्वंति ।

ततः प्रविशति यथोद्दिष्टा मल्लिका नवमालिका कालिन्दी ।

मल्लिका। सहिओ तुह्माणं उम्पलं भवणसेण एव्व अणुमदो मए एसो मण्डणविही।

नवमालिका। सहि! मा मा असुहा सम्भावेहि।

मारुतं विलोक्य सहर्षं जनान्तिके। कालिन्दि! आअदो एव्व पिट्ठभाए महाभाओ किं पआविस्सामो। जेण सच्चप्पचओ होदु पिअसहीए।

कालिन्दी। सहि मामा पआवेहि समए एव्व पआसणिज्जो।

नवमालिका। स्मित्वा। सहि मल्लिए! णं तुएवि अज्ज विप्पलद्धम्हि।

मल्लिका। सानुतापं। कट्ठा।

नवमालिका। णं रत्तिअं अज्ज वि वञ्चिअ प्पाणपरिच्चाए पवुत्तासि।

मल्लिका। सलज्जं।

कालिन्दी। दिट्ठिआ तक्खणासादि अरक्खसेण। णेकूण महाभाअस्स हत्थे पाडिआसि।

कलकण्ठः। सखे! यत्रैव पतिता मल्लिका कथं तत्रैव स्थले सन्निहितोऽसि।

मारुतः। अहं खलु अन्तरूपवनं विविधसुरणास्खलितेन सम्भ्रमस्तत्रैवातिष्ठं।

मल्लिका। कालिन्दि णहि सो रक्खसो। अविदु कोवि दिव्वपुरुषो एव्व। कहिअं भअवदीए महाभाअस्स जणणन्तार मित्तं सोत्ति। उभे विस्मयं नाटयतः।

कलकण्ठः । सखे ! क गतः स महापुरुषः । यस्त्वया जुगुप्सितादृक्षोजन्मनो विमोचितः ।

मारुतः । स खलु मां सुहृत् स्नेहेनाऽऽभाष्य सखे ! यदा मां स्मरिष्यसि । तदा सन्निधास्ये विधास्ये च तवाभिमतमिति वदं स्तिरोऽभूदेव ।

नवमालिका । ता तुमं एव्व विप्पलंभशीला ।

मल्लिका । उड्डश्रो आलम्भो ।

नवमालिका । सहि ! कहेहि किं अणुउलो तुह एसो मणहणविहि णवेत्ति ।

मल्लिका । सलज्जस्मितं । सहि ! मह एसो ईरिसोत्ति ण पारेमि लज्जाए पसंसिदुं । दूरे क्खु वश्रणाणं पिअसहीए पसाहणणे वुत्तो ।

कलकण्ठः । सम्यगुक्तं मल्लिकया वचनानां दूर इति । नन्वेकैकं इति वर्णनमतिक्रामति । इदमेव तावत् पश्य ।

अस्याः सुगन्धिनवकुङ्कुमपङ्कदत्तो-
मुग्धस्थकान्तितिलको मदिरेक्षणायाः ।

मारुतः । साभिलासं ।

आविष्टरागमभिराममुखारविन्द-
निष्यन्दलग्नमिव मे हृदयं द्वितीयं ॥

कलकण्ठः । सस्मितं । सखे ! अपहृतमेव मम वचनं ।

भ्रमरकः । णाह ! पेच्छ पेच्छ । एसा णाहेण दिण्णा वेढइ हारयट्ठी कन्धरामूलम्मि तत्तहोदीए ।

कलकण्ठः । निर्वर्ण्य । सत्यं सैवेयं वयस्य दोरन्तर विहार दुर्लक्षिताहार वल्ली । विमृश्य ।

मुक्तावलीस्मर विदाह्वविपाण्डु मूले
नद्धा चकास्ति जित कम्बुनि कण्ठकाण्डे ।

मारुतः ।

निश्चिन्वती मृगदृशो वदनं मृगाङ्क
नक्षत्र पङ्क्तिरिव सम्पतिता नभस्तः ।

कलकण्ठः । सप्रश्रयं । वयस्य ! ननु सर्व्वोत्तरस्ते प्रतिभोत्कर्षः ।

मारुतः । सखे ! सकलप्रतिभादूरमुदार विरचितमूल धम्मिल्ल गर्भक ग्रथितमालती कुसुम सौरभ्य लुभ्यदिन्दिर-सुन्दरी मधुरसमारब्ध मङ्गलसङ्गीतकं अनर्घ्यताटङ्क करपल्लवित कोमल कपोल विन्यस्त पत्र लता सङ्कुलं अति सुरभि हिमजलशबल कुङ्कुम घनसार सरसाङ्गराग लुलित घनतुङ्ग कुचकुम्भाभोगप्रेङ्खोलद्धारं विशालनिविड़ घनितम्बमण्डल मण्डितकाञ्चन काञ्चीगुण पद्मरागमयूख पुञ्जमञ्जिष्ठारञ्जितमङ्गलक्षौमं आमुक्तमौक्तिक नूपुरकिरण क्षालमहंससंसेवितचरण पुण्डरीकं अभिराममस्याः विवाहनेपथ्यं । निर्वर्ण्य । अथवा पुनरुक्तान्येवानवद्याङ्ग्या मण्डनानि । निःश्वस्य ।

(१०) नेत्रोपान्तवतंसिते श्रुतिपुटे नीलोत्पलं निष्फलं
हारस्योपरिकर्म्मिते स्तनतटे हारोव्वहारः कथं ।

(१०) नेत्रोपान्तेति । वामाक्ष्याः सुन्दर्य्याः नेत्रोपान्तवतंसिते नेत्रोपान्तेन अपाङ्गेन ल[illegible]णया कटाक्षेणेत्यर्थः वतंसिते कर्णपूरीकृते श्रुतिपुटे नीलोत्पलं निष्फल अक्रियाकारित्वादिति भ[illegible]

पिष्टालक्तकपातनं चरणयोः पीड़ाफलं ताम्रयोः
वामाक्ष्या वपुषि स्वभावसुरभौ व्यर्थानुलेपव्यथा ॥

भ्रमरकः । कहं ण दीसइ चूलापदेसे सिहामणी ।

नवमालिका । सहि ! इमस्मिं रअणमुउरे पेच्छ तुह अवअवलच्छी मण्डिअं मङ्गल मण्डणं । इति दर्पणमपे दर्शयति ।

मल्लिका । सलज्जं पश्यति ।

मारुतः । सखे ! पश्य ।

एतावति त्रिभुवने नवयौवनोद्यत्
उद्दामरूपमहिलाजनमण्डितेऽपि ।
नास्त्येव विभ्रमनिधेरुपमानमस्या
यद्यस्ति रत्नमुकुरे प्रतिबिम्ब एषः ।

---

इत्यत्र बहिर्भागुरिरल्लोपमित्यल्लोपमित्यल्लोपः । अवतंसो न स्त्रियां स्यात् कर्णपूरे च शेखरे इति विश्वः । हास श्रीपरिकर्मिते मन्दहास शोभा परिष्कृते स्तनतटे हारोऽनु मौक्तिकमाला वा अलङ्कारः कथं निष्कलङ्कः किं इत्यर्थः । कलङ्कावत एवेति भावः । हारो मुक्तावली युद्धे इति विश्वः । ताम्रयोः चरणयोः पिष्टालक्तक पातनं लाक्षारस सम्प्रदानं पीड़ाफलं पीडैव फलं यस्येतिविग्रहः । पीडामात्र प्रयोजकमिति भावः । स्वभाव सुरभौ पद्मिनीत्वात् सहज पद्मगन्धे इत्यर्थः । तदुक्तं कमलमुकुल मृद्वी फुल्लराजीवगन्धः सुरत पयसि यस्याः सौरभं तद्वदङ्गे इति । वपुषि शरीरे अनुलेपव्यथा उद्वर्त्तन प्रयासः व्यर्था निष्प्रयो जनेत्यर्थः । अत्र शैलोपान्तवतंसिते हास श्रीपरिकर्मिते रक्तयोः स्वभाव सुरभौ इति साभिप्रायेण विशेषण चतुष्टयेन स्थानविशेषेषु मण्डन वस्तुविशेषाणां नैष्फल्य कथनात् परिकरालङ्कारः । अलङ्कारः परिकरः साभिप्राय विशेषणैः इति लक्षणात् ।

नवमालिआ। सहि ! पेक्ख पेक्ख। णिसग्गसिणिद्धणील-लोअणुप्पल सोहादुल्लक्खविसेस कज्जललेहं सिणिद्धमहुर-धवलदुव्वलगण्डमूलुप्पान्तपलुत्थ अत्थुरिआ पत्तलआ विभा-विअ सोहादिसअं मणभरकुसुम दिलअ लंञ्छिअ मणोज्जणिडालदेसप्पडिविम्बिअ गोरी चरणलग्ग लक्खारुणा अङ्कर भिरअन्दलेहासोहं उदार सीमन्त पहादिससुन्दर सिन्दूर कन्दलिअ अन्दप्पपआवङ्कुरं। सअलजणलोअणाणं दइन्दमण्डलं पडिविम्बइ तुह वअणम्बुअं ॥

मल्लिआ। णोमालिए ! कीस सिहामणिणा ण भूसिदह्मि।

नवमालिका। सहि ! किं विसुमरिदं णं तुए एव्व कहिअं रक्खसादो णिपडंतीए पुणो वि पब्भट्ठो सोत्ति।

मारुतः।

इह शिखामणे ! किं पुनरपि पतितोऽसि पश्य दौर्भाग्यं।
दिष्ट्या कथञ्चिदस्याः प्राप्तवतस्ते पुनः सङ्गं ।

नवमालिका। ता पसीद। मारुतं कटाक्षेण दृष्ट्वा। एदस्स तुह वद्धाणुराअस्स सव्वरअसस् देहि करकमलं। आणंदेहि वन्धुवग्गं।

मल्लिका। सान्तर्मन्युभारं। सहिओ तरुणसिहण्डि पिच्छ सिणिद्ध सामल मङ्गलङ्गस्स महाभाअस्स मारु-दसस दंसणादो पहुदि जं अणो पुरुसो हिअएणवि ण चिन्तिओ तेणेव्व सच्चेण सपामि दृदो वरं वि णाहं अस्सं पेक्खिस्सं महाभाअ पुसलाअसमुद्दावादिहिप्पवाह विगाढ प्रविस्त हिं तेहिं णेत्तेहिं।

कलकण्ठः। सखे! चूषय श्रवणपीयूषं।

मारुतः। सानन्दं। अयि मन्मानसविहार मल्लिकान्वि मल्लिके!।

तव हृदयसमूढ़प्रेमरागैः शुभाङ्गि!
प्रति नवपरिवाहस्यन्दहृद्यैर्वचोभिः।
खरहुतवहदग्धः शीतलैः सर्वतोऽहं
स्नपित इव सुवाणि! प्राणिमि प्राणनाथे॥

पुनर्नेपथ्ये। नवमालिके! ननु भण्यते त्वय्येनामभिहितस्य मौहूर्त्तिकगणागृहीतः परिणयसमयः। आकर्णयन्ति।

मल्लिका। सवाष्पं। हद्धि! पुणोवि भअवदी आदिसइ सहि णोमालिए उट्ठेहि उट्ठेहि जाव इह एक्कदा। आअमिस्सदि भअवदी ता एत्थ लआवल अन्दरे गदुअ किम्वि तुह्ने पत्थ इममामि।

नवमालिका। सहि। आणाद्दाणा जोग्गो जणो कीस पत्थीअदि। ता जह्विट्ठं अह्ने अहिलसिए अत्थे णिओइअ णिव्वट्ठेहि भअवदीए आदेसं।

मल्लिका। सहि! विसाद्संभमवेव्विरंगी ण पारेमि उट्ठिउं वाहपूरन्दइअ णअणा ण सक्कुणोमि दट्ठुंवि। ता तुमं मह हत्थं ओलंविअ उट्ठावेहि। इति हस्तं प्रसारयति।

सख्यौ। संज्ञया मारुतं पाणिग्रहाय चोदयतः।

मारुतः। साध्वसं नाटयति।

कल। सखे! नायं साध्वस समयः। अनुभूयतां चिरकालकाङ्क्षित मल्लिकायाः पाणिग्रहण महोत्सवः।

मारुतः । लतावलयान्निर्गत्य मल्लिकायाः पाणिं सपुलकं गृह्णाति ।

मल्लिका । सहर्षं । सहि ! णोमालिए ! अणारिसो तुह हत्थ सोहग्गो जं गहिअ मेत्ते एव्व हत्थे अमुअ वरिस सित्ताइ विअ णिव्वुदाइ मह अंगाइ ।

मारुतमवलम्बमानैवोत्तिष्ठति ।

मारुतः । अदत्त प्रतिवचन एव मन्दमन्दं नयति ।

सख्यौ । सस्मित मनु गच्छतः ।

कालिन्दी । सहि मल्लिए ! पत्तम्ह लअं इरिदा कहेहि कहणिज्जं ।

मल्लिका । सनिश्वासं । सहि णोमालिए ! कस्सिं लदा मूले आअदह्म ।

नवमालिका । इदं बहललग्ग सुमरस परिवाह मेदुर परिमल लोल लोलम्ब पुञ्ज बद्ध तिमिरं मन्दारमूलं ।

मल्लिका । सबाष्प गद्गदं । हन्त मए एव्व वड्ढिदो एसो मन्दारो । सानुनयं । ता विवित्ते एत्थ पदेसे किम्पि तुम्हे पत्थेमि ।

कालिन्दी । अवहिदह्म ।

मल्लिका । जीअउ जीविदणिव्विसे सो मारुओ । इत्यर्धोक्ते वैवर्ण्यं नाटयति ।

सख्यौ । परस्परं पश्येते ।

मल्लिका । अइ जीविदणिव्विसेसे णोमालिए पिअसहि कालिन्दि जस्स परिपुण्णचंद सुन्दराणणस्स महाभाअस्स चलण सुस्सूसण सोहग्ग पच्चासा पडिट्ठाविअ विहडन्त

जीविआए मए पुढमदंसणादो पहुदि एत्तिअं समअं पेच्छन्तीए सहिदाअ मन्दमन्दवलिअघरदीहिआरविन्दमअरन्दवाहिणो उज्जाण मारुआ। आअसिदाअ पअवडमअरन्दअभुअङ्गउडकुण्डलिअ धणहरिद टङ्कारघोरा महुअरहुङ्कारा। अहिवाहिदाअ पल्लविअ माअन्दकुहरविहरन्तकुहुमुह घडिउड्डमर पञ्चमः पवञ्चा वसन्तदिअहा। आआसिदा अ तुम्हे किसलअ तप्पकप्पणेहिं मुणालभङ्ग हाररअणेहिं कदलीदलधप्पितवीअणेहिं कप्पूरक्खोदचच्चिक्क सम्पादणेहिं अणे हिं वि तेहिं तेहिं मअणोवआरेहिं। जेण वा तह रक्खसहत्यादो पव्भट्टा गअणम्मि णिपडन्ती तस्सिं णिसीहे रक्खिदह्मि। तस्स पुस्सभाइणीणं एव्व सुलहस्स महाभाअस्स जइ दुल्लहो एव्व सङ्गमो ता मणे सुहं पावएसु ण एक्कतमं खणंवि मह जीविअधारणंति। ता आमन्तेमि तुह्मे पुणोवि जणणान्तरे दंसणस्स। सप्रश्रयं अञ्जलिं बद्धा । सगद्गदम्। सहि! महकिदे एव्वं पणमिअ विविक्ते विसाविदव्वो तुए सुन्दरवभुलआ लंच्छिअ दीहर सिणिद्धलोअणा पुण्डरीओ सोजणो जह परलोअ गदाए वि मह जलञ्जलिदाई होइ।

इति रोदिति।

मारुतः। सकरुणं। स्वगतं।

(११) एतानस्याः शिव शिव तनुत्याग वद्धोद्यमायाः
कल्याणाङ्ग्याः करुण मधुरान् शृण्वतो मे विलापान्।

---

(११) एतानिति। अस्याः विश्रायसोः गौरीप्रसाद :कन्यायाः

दाक्षिण्येन द्रवति हृदयोल्लीयते मोहवृत्त्या-
स्तायत्यार्त्या स्फुटति हृदयं हर्षतस्फायते च ॥

कालिन्दी । पडिहदं दे अमङ्गलं ।

नवमालिका । अज्ज वि वर्त्तयति ।

मारुतः । प्रकाशं ।

(१२) वीणाभिराम कलकोमलवाणि ! रामे
मा मा वरोरु ! करुणं भण वाम वामे ।

---

इत्यर्थः । सखिजनस्य बोधनाय इदं शब्दप्रयोगः । शिव शिव इति खेदे अयं च वक्ष्यमाणस्य अमङ्गलत्वाभिप्रायेण तनुत्याग बद्धोद्यमायाः शरीरहानकृत प्रयत्नायाः कल्याणाङ्ग्याः जगन्मङ्गल गात्र्या मल्लिकाया इत्यर्थः । करुण मधुरान् दीनमनोहरान् एतान् विलापान् इमानि परिदेवनानि शृण्वतः मे हृदयं मनः कष्टं दाक्षिण्येन वक्रुभावेन द्रवति दयया भल्लीयते प्रणश्यति । मोह-वृत्त्या मोहविरचेन मोहप्राचुर्य्येणेति यावत् । वृत्तिर्विवरणाजीव कैशिक्यादि प्रवर्त्तने इति मेदिनी । स्तायति ताम्यति आर्त्या पीड़या स्फुटति दलति हर्षतः प्रीत्या स्फायते प्रचुरीभवति च ॥ अत्र मनसः द्रवीभावाद्यवस्था पञ्चोक्ति क्रमेण प्रयुक्तैः कतिपयपदैः तदवस्था बीजान्यपि दर्शितानि । यथा अस्याः इत्यनेन विश्वावसोः गौरी प्रसाद लब्धेति दाक्षिण्यं तनुत्यागबद्धोद्यमाया इत्यनेन प्राणहानेच्छुरिति दया । कल्याणाङ्ग्या इत्यनेन अतिदुर्लभ मनोहराङ्गीति मोहवृत्तिः । करुण मधुरान् इत्यत्र करुणा इत्यनेन परलोकगता एवि मह इत्या-दिना दीना विलापा इत्यार्त्तिः । मधुरा इत्यनेन तु सो जणो इत्या-दिना स्वविषया विलापा इति हर्षः । इह अस्येति प्रयोगः साधुरेव तथाच प्रयोगाः शिरोऽर्त्तिं नाशयत्याशु रसोऽयं मुचुकुन्दकः ॥ अनुयो-चति यः कृत्वा सोऽर्त्तिं प्राप्नोति केवलां इति ॥

(१२) वीणाभिरामेति । हे वरोरु ! वीणाभिरामकलकोमलवाणि !

हा हन्त बन्धुजन चित्तसरोज हंसि
दूरं विमुञ्च सहचारिणि साहसानि॥

---

अतएव रामे मनोज्ञे इत्यर्थः। यद्वा अङ्गने इत्यर्थः। रामः पशुविशेषे स्यात् इत्यादिना मनोज्ञेऽपि च वाच्यवत् रामाङ्गना हिङ्गुलिन्यो रिति विश्वः। वाम वामे अतिसुन्दराङ्गने इत्यर्थः। यद्वा अतिमनोहरे इत्यर्थः अवल्गु आवाधे च इति द्विभाषः पुंवद्भावश्च। कामि वाक्यत्वादनेन स्वपीड़ा द्योत्यते वामं सव्ये प्रतीते च द्रविणे चातिसुन्दरे। इत्यादिना वामापि च स्त्रियां इति विश्वः। करुणं दीनं मा मा भण मैव वादीः इत्यर्थः मामेत्यादरात् द्विरुक्तिः। अथवा काठवेन किमयं निषेध इत्यत उक्तं वीणाभिरामकलकोमलवाणि इति दीनत्वेऽपि अथवा मनोहरं ते भणनमिति भावः। श्राव्यत्वे कुतो निषेध इत्यत उक्तं। वाम वामे इति त्वत्करुणभणने त्वन्निष्ठं वामात्वं तव तदनौचित्यमत्वा असत्पीडा हेतुरिति भावः। लोके छुद्रस्य वस्तुनः पीड़ायां तन्निष्ठमोत्तमत्वेनैव तस्य तदनौचित्य मत्वा तदभिज्ञानां खेदानुभवः तथाह महाकविः। यद्यपि न कापि हानिः परकीयां चरति रासभे द्राक्षां। अनुचितमिदमिति मत्वा हा हा हाहेति तप्यते चेतः। इति इयं च द्राक्षा स्याद रसिकस्योक्तिः। तथाच प्रकृते संबोधद्वाद्वत्ति वामात्वं तद्रसिकस्य संबोधकस्य कामुकस्य पीडां द्योतयतीत्यतः आवाधे चेति शास्त्रप्रवृत्तिं युक्ता मेवोत् पश्यामः। हा इति विषादे हन्त इत्यनुकम्पायां हन्त हर्षेऽनुकम्पायामित्यमरः। हे बन्धुजनचित्तसरोज हंसि! बन्धुजनानां चित्तान्येव सरोजानि तेषां हंसि इति संबुद्धिः इह रूपकनिदर्शनाभ्यां यथा हंसी सरोजानां प्रावृट् प्रतिबन्धकत्वेन आत्मनि दुर्दशायां आश्रयदुर्दशा तथा तद्दुर्दशायां त्वदेकाश्रयाणां बन्धुजनानामपि दुर्दशा इत्याशयः सूच्यते सहचारिणि मया सह संचरमाणे इत्यर्थः साहसानि मस्से सुहं पावएस इत्यादीनि दूरं विमुञ्च इति योजना सहचारिणि इत्यनेन तु मत्समीपवर्त्तित्वात्तव सहीर्षभ्याभिप्रायेण साहसान्य सम्मता नीत्याशयः सूच्यते।

नवमालिका। जनान्तिके। कालिन्दि! अह्मारिसजणो दूर वाअड़े वि समाणं एव्व महाभाअस्स वअणं ता मसे ण जाणाइ पिअसही अज्जवि महाभाअं।

मल्लिका। सहि सुगन्धि! माइसंति कहं भणिज्जइ तेण मन्मथ जीवलोएण मल्लाह भङ्काअरहिअएण तह णिसीढदुग्गमे पदेसे एक्केण गदुअ मअलभूमण्डले क मण्डणस्स कम्बुराअ सुन्दरे कन्धराकण्डे खग्गप्पहारेण साहसं अणुट्ठिअं। तस्स दुल्लहे जीविअपरिच्चाअ साहसं अणुचिट्ठामि एव्व ता ण एत्थ पड़िज्जत्ता होहि। विसवेहि पुणो वि मह वअणेण महाभाअं। सगद्गदम्। णाह साहं मन्दभाइणी एक्कम्मिम्मि खणे तुह लज्जपरिरम्भा ता जणन्तरे वा तुह पिअसङ्गमं कंखेमि, सा उण मह सहजा मालिआ णाहेण मरगअ कवाड़ सिणिद्ध विसाले वच्छत्थले मण्णिव्विसेसं सव्वदा धारणिज्जा। इति मारुतं दृढं आलिङ्गति। सानन्दं साशङ्कं स्वगतं। कहं पिअसहीए सव्वङ्गीण चन्दणासारवरिस सरिसो महाभाअ परिरम्भ संवादी फंससो। मणे हिमअ सण्णिहिदो मं सुहावेदि। प्रकाशं। सहि णोमालिए! जाणेहि एदं पच्छिमं परिरम्भं।

सख्यौ। सस्मितं। स्वगतं। णहि णहि पच्छिमो परिरम्भो अविदु पुढ़मो दुईओ वा।

मारुतः। परिरब्धभाव एव सानन्दं।

कल्याणाङ्कचाऽनुरक्तमनसा त्वं येन सम्प्रार्थ्यसे
यस्यार्थे सुमुखि! त्वया पुनरसुत्यागोऽपि सम्मन्यते।

मल्लिका । स्वगतं । कोष मक्कड्डिम्मं मल्लिकिरूं पिअ-
सहोए । प्रकाशं । सहि ! कहिं सो ।

मारुतः ।

सोऽयं सुन्दरि ! पञ्चबाणविशिखव्यालीढदोरन्तर
स्वेदोत्पीडितपीवरस्तनतटस्वद्दोर्लतापञ्जरे ।

मल्लिका । अम्महे महाभाओ । सहर्षसाध्वसं । सलज्ज-
मटितिमपक्रामति ।

मारुतः ।

मामा ससाध्वसमवेहि विलोलनेत्रे
दासे जने किमिति सम्भ्रमकातरासि ।
किं युज्यते वत मया चिरकाङ्क्षितस्य
मध्ये वराङ्गि ! परिरम्भसुखस्य भङ्गः ॥

मल्लिका । सव्रीडं वाचयन् । सहिओ साधु साधु ।

कलकण्ठः । सहर्षोपसृत्य । कल्याणि ! मैवं वादीः ।

विश्वोत्तरं प्रियसखं मम भूषयन्ती
नत्वं समस्तगुणशालिनि विप्रलब्धा ।
त्वत्प्राप्ति लोभमृगतृष्णिकयावगाढो
दिष्ट्या सखम्बरक एव तु विप्रलब्धः ॥

ततश्च । सौरभ्यसम्पदिव चन्दनपादपस्य (११)
ज्योत्स्नेव शीतकिरणस्य मणेःप्रभेव ।

---

(११) सौरभ्येति हे शोभने ! त्वं अस्य मारुतस्य हृत्स्थ इंग्रपदं
चन्दन पादपस्य सौरभ सम्पदिव शीत किरणस्य ज्योत्स्नेव मणेः
प्रभाकान्तिरिव विभूषणं भव । ते तव अमुना मारुतेन सह लब्धः

त्वं शोभने! भव विभूषणमस्य तासां
तैर्व्वासुनास्तु तव चाभ्युदयाय लब्धः॥

भ्रमरकः। उपसृत्य। चोमालिए! दिट्ठआ वड्ढाम
चाहाणं अब्भुदयेण।

प्रविश्य प्रहृष्टवदना मन्दाकिनी।

मन्दाकिनी। देवी लक्ष्मीः पार्व्वती वागधीशा
सीतेन्द्राणी रुक्मिणी सत्यभामा।
सावित्री साकन्धती याज्ञसेनी
शर्म्मिष्ठा च त्वत्प्रिदा स्युः प्रहृष्टाः॥

सर्व्वतो विलोक्य। सायङ्कं। क्व नाम इतोगता भवेल्लता-
भवनाम्मल्लिका। कतान्तरेण दृष्ट्वा सानन्दं। हन्त पूर्णा इव
मनोरथाः। अत्र हि मन्दारमूले मारुतः।

अयमति सुकुमार श्यामरम्येण सामि
प्रमितइवमृगाङ्को लोभनीयोऽङ्कन्केन। (१४)
विलसति नयनान्तं चारयन् क्रोड़नर्म्मे
मदनशवलनेत्रे मल्लिकाया मुखेन्दौ॥

---

आग्रवणं तासां सौरभ्य सम्पदादीनां तैः चन्दनपादपादिभिः सम स
इव लब्ध इव चन्दनपादपाद्या अयम मिवेत्यर्थः। अभ्युदयाय अभि-
वृद्धै अस्तु भवत इति विध्यर्थे लोट्। अत्र प्रथमान्वये सौरभ्य
सम्पदित्यादीन्युपमानानि त्वमित्युपमेयं विभूषणीभावः साधारणोधर्म्मः
इति वक्रूपमा। द्वितीयान्वये चन्दनपादपाद्याश्रवणं उपमानम्।
माहतानयणमुपमेयम्। तासां ते इति त पदद्वये उद्देश्यकथनं
अभिव्यर्थक परिणामोधर्म्मः इति पूर्णोपमा उपमाद्वयस्य परस्पर वैरपे-
क्ष्यात् संसृष्टिः।

(१४) सामिप्रमितो मृगाङ्कः अर्द्धचन्द्र इवेत्यर्थः।

प्रकाशं । नवमालिके ! किमिति विलम्ब्यते ।

नवमालिका । अह्महे भअवदी आअ देव्व ! पच्चुग्गअ भअवदि अह्मेहिं ण विलम्बीअदि ।

मल्लिका । सगद्गदं । भअवदि ! परित्ताअसु परित्ताअसु ।

इत्यञ्जलिं बद्ध्वा आगच्छति ।

मन्दाकिनी । मल्लिकामालिङ्ग्य । वत्से !

तुल्ये प्रेमणि सहाभिजन्मनि जगन्नेत्राभिरामे जने
त्वं कल्याणि ! सहानुरक्तहृदयश्लाघ्या सकामा भव ।
सोऽयं च प्रतिपन्नपुण्यसुलभां त्वां तुल्यरागश्चिरा-
दन्तः सम्भृतसङ्गमज्वरमहोदाहं जहात्वञ्जसा ॥

नवमालिका । सानन्दं । भअवदि ! णिव्वुत्तमणोरहे इमस्सिं मिहुणे णिअणिअज्जाण वेअड्ढीए सफलत्तणेण चिरस्स कअट्ठो होदु पआओ पसीदन्तु सव्वरुअ परिणअप्पसङ्ग कलुसिआइं बन्धुजणस्स हिअआइं ता माइ विरसिव्विसेसाणं तुह्माणं हत्थेण पइज्जा महाभाअस्स करम्मि पिअसही ।

मल्लिका । स्वगतं । सव्वहा सव्वमङ्गलावअणं पमाणं एव्व ।

मन्दाकिनी । नवमालिके ! किं मयाद्य दातव्येति । ननु प्रागेव तस्मिन् व्यतिकरे ।

आच्छिद्य तामसकराद्दत देहेव रक्षिता देव्या ।
अभिगलमर्पित मस्ते हस्ते दत्तास्य सर्वमङ्गलया ॥

अपि च । अस्मिन् परस्पररुचिप्रकृते विवाहे
सेयं निजैर्न गुरुभिः प्रतिपादनीया ।

प्राणेश्वरोदयपरायणा हर्षयोगा

केनार्पिता कुमुदिनी शशलाञ्छनाय ॥

तथापि । लोकयात्रानुवृत्तिमात्रक्रिया सम्प्रति । एहि वत्स मारुत !

मारुतः । आदिशतु भगवती ।

मन्दाकिनी ।

एषा विश्रुत वैभवस्य यशसामूर्जस्वलानां विधेः

पुत्री विश्ववसो रमेव जलधेः पुण्येन लब्धा चिरात् ।

एनां तुभ्यमहं ददामि चरितुं धर्म्मान् सह श्रेयसे

देवेन स्वयमङ्गजेन विहिते रागानले साक्षिणि ॥

कलकण्ठः । फलितमस्मत्सुखसुरद्रुमेण ।

नवमालिका । प्रसन्ना अस्माकं कुलदेवता ।

कलकण्ठः । सहर्षं । भगवति ! सर्वाकारानवद्य ममु सम्बन्धमालोच्य प्रसीदति हृदयं । पश्य

सहजधनविलासौदार्य्य सौन्दर्य्यराशे-

र्जननयनचकोरानन्दने चन्द्रिकायाः ।

परिणय कुतुकं यत् चानयोः श्लाघनीयं

कनककुसुमदाम्नः सोऽयमामोदयोगः ॥

नवमालिका । मल्लिकां निर्वर्ण्य । सनिश्वासं । स्वगतं । अविषाम अर्जावश्र महाभागस्य सर्व्वदा वल्लहाभवे पिअ-स हो ।

मन्दाकिनी । विहस्य । वत्स मारुत ! ।

मारुतः । सायहं । आज्ञापयतु भगवती ।

मन्दाकिनी ।

ज्ञातज्ञातव्यसारे नहि भवति परेणोपदेष्टव्यमास्ते ।
वात्सल्यं केवलं मां मुखरयति ततो ब्रूमि कल्याणवृत्ते ॥

मारुतः । सप्रश्रयं । शृणोति ।

मन्दाकिनी । मल्लिकां हस्ते व्टहीत्वा ।

एकापत्यं हि सेयं जनयितुरसवो बान्धवानां तदस्याम् ।
मा स्यात् कालान्तरे ते स्वयमयमुदितःस्नेहबन्धो क्रसीयान् ॥

मारुतः । सवल्ल्यं । इन्त वात्सल्या दृश्यक्षनीयमप्या-शङ्क्यते युष्माभिः ।

कलकण्ठः । भगवति ! इत्यमतिप्रसक्ते युष्माकमभ्यर्थने वयस्यमधिकृत्य सहृद्यमुत्तरं नहि पश्य ।

स्नेहोऽस्यां स्थिरतामगादिति सकृदृष्टेऽपि तुल्यं जने
ख्याता ख्यावग इत्यसाम्प्रतमसौ यद्भ्रूवशे स्थास्यति ।
दाक्षिण्येऽस्य समोऽस्ति नेति सुहृदि स्नेहोक्तिरस्यां स्फुटा
नैनं स त्यजतीति सर्वमनयैवाध्यस्यते तन्निशि ॥

मन्दाकिनी । सविमर्शं मल्लिकां प्रति । पुत्रि ! त्वमपि किञ्चिदुपदिश्यसे ।

मल्लिका । आणवेदु भअवदो ।

मन्दाकिनी ।

शुश्रूषामनुबध्नती गुरुजने वाक्ये ननान्दुः स्थिता
दाक्षिण्यैकपरायणा परिजने स्निग्धा सपत्नीष्वपि ।
सन्नद्धातिथिसत्कृती गृहभरे नैस्तन्द्र्यमाबिभ्रती
वत्से ! किं बहुना भजस्व कुशलं भर्त्तुः प्रिये जाग्रती ।

मल्लिका । सलज्जं मनसाङ्गी करोति ।

नवमालिका। उइग्रो उवइसो।

मन्दाकिनी। वत्स मारुत! इदानीं दुरात्मनः शम्बरकस्य वञ्चनाय प्रतिश्रुतागमं स्मर माकन्दनामानं तं दिव्यपुरुषं गृहीतमल्लिकावेशः सन्निधत्स्वेति।

मारुतः। ध्यानं नाटयति।

ततः प्रविशति मल्लिकावेषधरो माकन्दः।

माकन्दः। सखे मारुत! अयमहमस्मि। साधयामि तवाभिलषितं! मन्दाकिनि मारुतयक्ष्में विस्मयं नाटयन्ति।

कालिन्दी। जनान्तिके। णोमालिए! सो एसो दिव्वपुरुषो जो रक्खसभावादो मोइदो महाभाएण।

नवमालिका। कालिन्दि! अच्चेरं जो पिअसहीए भक्खणप्पवुट्टो सो अज्जरक्खणे पि पवट्टइ। मल्लिकां प्रति। सहि! पेच्छ पेच्छ। असवि कावि पिअसही अह्माणं

मारुतः। महापुरुष! त्वर भगवत्या यत् प्रागुपनाथितं।

माकन्दः। वाढ़माचरामि। प्रविश्य काषायाम्बरयुगलहस्ता चारिका। भअवदि! एदाइं चवलएण आणीदाइं अम्बराइं।

कलकण्ठः। सस्मितमम्बरे गृहीत्वा निष्क्रम्य मन्दाकिनीवेशधरः प्रविश्य। अयमस्मि भगवति!।

मारुतः। पततु त्वच्चरणयोः शम्बरः।

मन्दाकिनी। कालिन्दि नवमालिके प्रति। वत्से! युवाभ्यां सह कलकण्ठेनानुवर्त्तितव्योऽयं महापुरुषः।

उभे। जं भअवदी आणवेदि।

माकन्दः। सस्मितं। भगवति! तद् गच्छामि शम्बरकपरिणयाय।

मन्दाकिनी । वत्स साधय प्रागुपदिष्टेन पथास्मदभिलषितं ।

माकन्दः। एहि सखे कलकण्ठ ! तुल्यस्त्वयाहं मारुतस्य।

कलकण्ठः । महापुरुष ! सर्वेषां नः पूज्यतमोऽसि तदेहि गच्छामः ।

मन्दाकिनी । रमणीयास्त्वास्मदाश्रमोपशल्यभूमयः ।

ततस्त्वात्र मारुतं प्रति ।

उत्कूजत्कोकिलालीकवलितसहकाराङ्कुरामेवशङ्का
प्रक्रीड़न्नीलकण्ठस्वनमुखरतमालान्धकारोपगूढाः ।
उर्वं रुद्यानसीमामरिचकिसलयग्रासगर्वं चकोरी
चञ्चुर्लौहित्यधारा विदधतु युवयोः स्वैरलीलासु सौख्यम् ॥

अपिच ।

क्रीड़ाश्रान्तिषु तासु तासु कुसुमश्रेणी वितानाञ्चिते-
ष्वारादाबल्लता गृहेषु शनकैराराधयिष्यन्ति वां
सद्यो निर्द्दलितप्रसूनमकरन्दासारमग्नोत्थितावा
ताश्चोमसरस्तरङ्गकलहं सालापवाचालिताः ।

इति निष्क्रान्ताः सर्वे । इति षष्ठोऽङ्कः ।

---

अथ सप्तमोऽङ्कः ।

ततः प्रविशति नवमालिका ।

नवमालिका । सहर्षं । दिट्ठिआ वड्ढिओ मूढ़ो सम्बरओ । जेण तत्तारिसवेससुउमारं तं दिव्वपुरुषं मल्लिए त्ति मसन्तो णिव्वुत्त विवाहविही सअलजणग्घोसिय-

जामादु सहीएत्थ विक्कुणाअ घरे आअदुवन्तो अहवा किं एत्थ अच्चेरं। जं गहिअ परमत्थाणं वि तस्सिं पिअसही बुद्धी पुणो पुणो होइ। अज्जव्व अहं मअण सरपङ्गण जज्जरिअं बाल सम्बरअ मुस किन्तिमलज्जामदणावाउं तं बहुसो णाम अणुणअंतो सअणघरे णिओलिअ अह कहं विणिग्गअह्मि। विहस्य। कलअण्ठस्स विसुट्ठु अणुट्ठिज्जइ छअवदीए महोवआरित्तणं जेण कइराअ सम्बरएहिं चरणेसु णिपडिअ भअवदि तुह्मेहिं अणु क्कइदव्वा वामसीला रमअन्ति एत्ति बहुसो पत्थिदो पुढमसङ्केदिअ महुअरिआ गूढ़णिव्वट्ठिअ रमअन्तिआणे वच्छो भमरओ कलपिङ्गएण परिणइदो। सानुकम्पं। सा क्खु तवस्सिणी रमअन्तिआ एत्थ किंवि ण जाणइ केवलं जइ मे कलपिङ्गअस्स परिणओ ता परिच्चइस्सं। जीविअं त्ति गाढ़कंपविसआ उज्जाण केलिघरं गदुअ णिजढ़ा वट्टइ जं उण ण परिच्चअइ जीविअं तत्थ महुअरिआ वअण वड्ढिआ कलअण्ठ लाहपच्चासेव्व परमं कारणं। परितो विलोक्य। सानन्दं। अह्म व्वअसाअ समुद्दओ णिहलिअ णीलज्जण पुज्जमंसलम्बआर णिवभरो णिसीढारम्भो उच्छवव्वावार परिस्सन्तपसुत्तो अ सअलो परिअणो। परिक्रम्य। अग्रतो दृष्ट्वा। एसो चउस्सालोकद्देसे गहिअ भअवदी वेसो कलअण्ठो णववहूवेसधरं भमरअं महुअरिआए सह किंम्पिअ अणु वट्टइ। पुनर्विलोक्य। सहासं। हन्त जामादुओ कलपिङ्गओ वि इह व्ववट्ठइ ता अहं वि गदुअ वड्ढावेमि परिहासलअं। इति निष्क्रान्ता। प्रवेशकः।

ततः प्रविशति यथानिर्दिष्टाः कलकण्ठभ्रमरक मधुकरिका कलपिङ्गकाः नवमालिका च ।

कलकण्ठः । सायंवं । जनान्तिके । नवमालिके ! किमपि फलितो मन्दाकिन्याः सुगूढविवर्द्धितो नयसुरतरुभूर्यः प्रेम फलिष्यति वा नवा ।

अवधि विधुरामज्ञातरूव्यपोह महौषधीं
सुकृतसुलभां किंवा लप्स्ये प्रियां रमयन्तिकां ।

नवमालिका । जनान्तिके । महाभाअ ! सुरदरू कहं वा फलिस्सदि । अविअ गदाक्खु पुढमं एव्व लआघर मज्झमणिजढाए रमअन्तिआए सविहं कालिन्दी । । ता सा एव्व सव्वं सं जो अहुस्सदि एत्थ उण पेक्खीअदु दाव एसो खणं परिहासो ।

कलपिङ्गकः । भगवति ! किमेषा वदति नवमालिका अपि चाटुचतुरस्य मद्गुरोः भ्रम्बरकस्य प्रणयसरसैरनुनयवचनैर्जनित विस्रम्भागता शयनगृहमाकाशवाणी प्रभाव लब्धा मल्लिका ।

कलकण्ठः । स्वगतम् । भूयोऽपि भगवती स्वरेण व्यवहरामि । प्रकाशम् । सत्यं चाटुचतुर एवास्माकं जामाता । कथयति नवमालिका तथा व्रीडाशालिन्यपि मे वत्सा नवेऽपि वोढरि चिरसंस्तुत इव जातविस्रम्भा शय्या गृहं प्रविष्टेति ।

नवमालिका । भयवदि ! किंबहुणा उवकिदं महाभाअं आआसवाणीए जदो एव्वं णाम दक्खिणो जामादा लद्धो अम्हेहिं ।

कलपिङ्गकः । आकाशवाणिप्रसङ्गेन सहर्षं स्वान्तः स्मरते ।

मधुकरिका । अन्नाणं उण भअवदीए उवक्किदं जाए कहराअपक्खेठिदाए दक्खिणत्तणा णअसीलसोभग्गादिहिं गुरुं पि सरिसखं तस्स एदस्स जामादुणो अम्हे वि णिव्भच्छिअ दिखापिअ सही रमअन्तिआ अम्होहिं उण एत्तिअं समअं ण जाणिदो एव्वं विहो एसोत्ति ।

कलपिङ्गकः । सानन्दम् । स्वगतम् । सत्यमाह मधुकरिका असंस्तवान्नावगता एव मन्मुणा मुग्धया रमयन्तिकया ।

मदनपीड़ां नाटयति ।

भ्रमरकः । सगूढ़स्मितम् । स्वगतम् । णड़दस्स मिच्छाविलाससालिणत्तणं । मूर्द्धानं नमयति ।

कलपिङ्गकः । भगवति ! लज्जावती न पश्यत्यपि मामियं दीर्घविशालेन लोचनेन । अतः कथय किमत्र प्रतिविधातव्यम् ।

कलकण्ठः । उपायं किं न जानासि ।

छन्दानुवृत्ति परताव्याजेनालाप सम्भेदः ।

हठवैमुख्यमितो मे मुग्धा विस्रम्भणोपायाः ।

कलपिङ्गः । सम्यगुपदिष्टं भगवत्या । तत् प्रथमं आलाप सम्भेदैमास्याः लज्जां क्षणशः कणशः खण्डयामि । भ्रमरकं प्रति । सानुनयम् । अयि सुवचने ! संलप मां कलकण्ठधिक्कारिणा वचनेन ।

भ्रमरकः । सक्रोधम् । जनान्तिकम् । सहुअरिए ! एदस्स णाहकलअण्ठ धिक्कार णिरदस्स कवोलेसु किं असणि-

वादमिट्ठुरं च विढ़ंदेमि। जह सव्वेवि दन्ता गुलु गुलुत्ति गलन्ति।

मधुकरिका। विहस्य। जनान्तिकम्। अहिकोवण क्खण-मेत्तं वि कट्ठं ण सहिज्जइ णं अणुपदं एव्व एव्वं करिस्सदि।

कलपिङ्गः। मधुकरिके! कस्मादियं आवद्धभ्रूलता भङ्गमुत्कुपितेव ते प्रियसखी।

मधुकरिका। सच्चं उक्कुपि देव्व।

कलपिङ्गः। सावेगम्। किमिति निर्निमित्तं कुप्यति।

मधुकरिका। एसा क्खु। अहिमाणंसिणी सुव-अणासहेण अक्कारिदो गोवतप्पलिअं संकेइ।

कलपिङ्गः। सस्मितम्। युज्यत एतत्।

मानाग्निवर्द्धन महौषध मेतदेव
स्त्रीणां सपत्नवनिताह्वय कीर्त्तनं यत्।
अव्याजनिर्भर भय प्रणतोत्तराणां
मन्ये विशेषत इदं कुलकन्यकानाम्॥

नवमालिका। णं जामादुणो एसेव्व सुवअणा सद्देण सम्बोहिआ सोहणं से वअणंति।

कलपिङ्गः। सत्यमाह नवमालिका ननु इयमेव सुव-चना। निःश्वस्य। हन्त किमत्र प्रतिविधास्ये। भगवति! युष्माभिरियं प्रसादनीया ननु प्रागपि युष्माभिरेव निर्व्वर्त्तितोऽयमावयोः परिणयः।

कलपिङ्गः। जामातः नातः परमस्माकमधिकारः। पश्य।

यावद्यूनोः परिणय विधिः सम्प्रवर्त्तेत तावत् (१)
विघ्नच्छित्त्यै विहितधृतयो बन्धवो व्याप्रियेरन्।
पश्चान्मानातिशय सुलभप्रेमकोप प्रसादे
पारम्पर्य्यात् प्रभवत इमे केवलं पुष्पधन्वा॥

कलकण्ठः। सविषादं। तर्हि कथ्यतां को नामास्याः कोपप्रशमनोपायः

कल। विहस्य।

प्रणयकलहभार प्राप्तमौन प्रह्वाणां (२)
अनुनय विषयोऽमी योषितां मानिनीनाम्।
शपथ चटुविशेषाः सन्त्यपि प्रेमकोप-
प्रशमन परमास्त्रं पादमूले प्रणामः॥

कलः। सहर्षम्। तदहं कालक्षेपासहः। परमास्त्रमेव प्रयोक्ष्ये। इति सवल्गु मं पादमूले प्रणमति।

भ्रमरकः। सहासम्। जनान्तिके। किं अज्ज वामचरणेण ताड़इस्सामि हदासं।

मधुकरिका। जनान्तिके। मा एत्थ ताड़ेहि इदो अन्ति सअणघरं पिट्ठव्वो जाव अह्मे उत्तरसिं कज्जे पवट्ठामो।

---

(१) मानातिशयेन सुलभाः प्रेमकोपप्रसादाः ययोस्ते तयोस्त्व प्रभवतः प्रभू भवत इत्यर्थः।

(२) अमी शपथचटुविशेषाः। प्रणयकलहभारप्राप्तमौनप्रह्वाणां अतएव मानिनीनां योषितां अनुनयविषयः प्रसादनप्रकारभूताः सन्ति अपि तथापीत्यर्थः पादमूले प्रणामः प्रेमकोपप्रशमनपरमास्त्रं इति योजना।

नवमालिका। उट्ठेहि उट्ठेहि पसस्ता तुह पाणेसरी।

कलपिङ्गः। सहर्षमुत्थाय। किं प्रसन्ना भगवति! साधीयानयमुपाय उपदिष्टो युष्माभिः।

कल। जामातः प्रौढ़प्रायो निशीथः। तद्गच्छ सवधूकः शयनगृहं। आस्वादयतां अनेकप्रकारारब्धस्य पचेलिमं फलं। यावदस्माभिरपि क्वचिद्विश्रम्यते।

कलपिङ्गः। सानन्दं। झटित्युत्थाय भ्रमरकेण सह निष्क्रान्तः।

मधुकरिका। सहर्षं। महाभाअ! सुट्ठु एसो वञ्चिओ हदासो। विहस्य। पिक्कमाडु पिक्कमाडुलङ्गसीअ कामुएण साहाभिएण फलिङ्गो लद्धो। ता णिहुअं गच्छह्म उज्झाणघरं जस्सिं अविसाद वुत्तन्ताए एक्कव्व णिजढ़ा वट्ठइ तवस्सिणि रमअन्तिआ।

नवमालिका। णहि णहि एक्कव्व णं कालिन्दी वि तहिं चिअ गआ ता अह्मेवि अविलम्बिअं गच्छह्म। उत्थाय परिक्रामति।

कलकण्ठः। मधुकरिके। अपि नावगतं रमयन्तिकया आत्मनेपथ्यधरस्य भ्रमरकस्य कलपिङ्गकस्य च दाम्पत्यं।

मधुकरिका। कहं णाम अवगच्छइ मुद्धा जेण तं त्ति वञ्चिअ जण मए तत्तारिसपरिग्गहो पिअसहीकिओ भमरओ। ण वरं एत्तिअं जाणइ। मल्लिआ उण सम्बरएण परिणीदेव्व मंवि कलपिङ्गअस्स समं समप्पिदुं भअवदी इह आअमिस्सदित्ति।

कलः। सानुकम्पं।

एषा मामिममुपगम्य नावगच्छेत्

काषायग्रहण तिरोहितात्मवेशं ।

नवमालिका । संस्कृतमाश्रित्य ।

शोणाम्भोरुहवनरेणुदिग्धपक्षं

मारात्तावत सरटेव राजहंसं ।

मधुकरिका । ता एदेण चउसमालदुवारेण णिग्गदुअ गच्छह्म । सर्वे निर्गमनं नाटयन्ति ।

कलपिङ्गः । परितो विलोक्य । अहो महान् अयं निशीथः । तथाहि

एतद्व्योमवनीवराहवलयं विश्वैकवीरस्मर-
स्कन्धावारमदान्धसिन्धुरकुलं श्यामावधूकैशिकं (३)
चक्षुषराञ्जनवस्तुधूकसदृशं विश्लिष्टचक्राह्वयः
स्तोमान्तर्ज्वरधूमकेतनमहाधूम्या तमस्तीयते ।

निर्वर्ण्य ।

(४) उत्खातच्छिन्नसन्ध्यारुणकमलवनो व्योमकासारमध्यं
मन्ये मत्तो निशीथाह्वयवनमहिषो मंक्षविशन्मिमंक्षुः

---

(३) श्यामा रात्रिः सैव वधूः तस्याः कैशिकं केशसमूहः श्यामा स्यात् शार्वरी निशा इत्यमरः । इह श्लोके मालामिरवयवं रूपकमलङ्कारः ।

(४)उत्खातेति मत्तो दृप्तः मिमङ्क्षुः मङ्क्तुं स्नातुं इच्छुः निशीथाह्वय वनमहिषः उत्खातच्छिन्नसन्ध्यारुणकमलवनः उत्खातं उन्मूलितं छिन्नं नाशितं सन्ध्यैव अरुणकमलवनं येन तथा भूतः सन् निशीथस्य सन्ध्योत्तरत्वेन नाशितसन्ध्यत्वमिति भावः । व्योमकासारमध्यं व्योम अम्बरमेव कासारः तस्य मध्यं मङ्क्षु क्षिप्रं अविशत् प्रविवेशेत्यर्थः । यथा कश्चित् प्रमत्तो वनमहिषो मज्जनेच्छुः सरसिजवनान्युन्मूलनच्छेदनादिना तुच्छी कुर्वन् सरोमध्यं प्रविशति तद्वन्निशीथोऽपि नाशितसन्ध्या समयः सन् गगनान्त-

तत्कालोद्भिद्यमानैः सह तनु पृथुभिः तारकाबुद्बुदौघै-
स्तस्मादेवोज्जिहीते कलुषितभुवनं भीषणो ध्वान्तपङ्कः ।

परिक्रामति ।

कलकण्ठः । अतिमनोहरोऽयं समयः । अत्र हि सञ्चरन्ति मृगनाभिचर्चितामेचकाम्बरकृतावगुण्ठनाः प्राणनाथमभिसर्तुमुद्यताः सुभ्रुवस्तिमिरदेवता इव ।

विहस्य ।

पश्य नवमालिके ! ।

जाताः प्रासादपाली कनकवलभिकान्यस्तमाणिक्यदीप-
च्छाया विच्छर्दतुच्छीकृतविरलतमा ये निशीथान्धकाराः ।
तेऽमीस्फारी क्रियन्ते प्रतिविशिखमितः कान्तसङ्केतधावद्-
वामभ्रूमुक्तनेत्रोत्पलतरलतरतारका मेचकिम्ना ।

मधुकरिका । एदं उज्जाणमज्झं आअदह्म ।

नवमालिका । तिमिरातिशयं विभाव्य । सङ्कुलमाश्रित्य ।

---

रालं व्याप्नोतीति भावः इति मन्ये जानामीत्युत्प्रेक्षा तत्र लिङ्गमाह । तस्मादेव निशीथ संज्ञक वनमहिष कृतव्योम सरोन्तराल प्रवेशादेव तत्कालोद्भिद्यमानैः तत्काले पूर्वोदितप्रवेशसमये उद्भिद्यमानैः बहिः-प्रकाशमानैः तनु पृथुभिः अणु महद्भिः तारकाणामेव बुद्बुदानां ओघैः इन्दैः सह ओघो इन्देऽम्भसां रये इत्यभिधानं । भीषणः ध्वान्तपङ्कः ध्वान्तमेव पङ्कः कलुषितभुवनं कलुषितं दृष्टिप्रतिरोधकत्वेन आकुलीकृतं नैर्मल्य प्रतिबन्धकत्वे आविलीकृतञ्च भुवनं जगत् उदकञ्च यस्मिन् कर्मणि तद्यथा भवति तथा भुवनं विष्टपे लोके सलिलेऽपि वियत्यपि इति विश्वः उज्जिहीते उद्गच्छतीत्यर्थः । तस्मादेवेति । एवकारेण निशीथाख्यवन-महिषकर्तृकव्योमकासारमध्यप्रवेशाभावे कथमीदृक् ध्वान्तपङ्कोद्गम इति भावो लक्ष्यते ।

कलपिङ्गस्य परिणयं मरिसब्ब। पुदा भअवदी एत्थ आअच्छ-दुत्ति ।

कलकण्ठः । भगमन तिमिर एव स्थित्वा सर्व्वं शृणवाम: । तथा कुर्वन्ति ।

ततः प्रविशति यथोद्दिष्टा रमयन्तिका कालिन्दी च ।

रमयन्तिका । निःश्वस्य स्वगतम् । का एत्थ गई इम्स एदं अदि ज़ुउच्छिअं आरम्भं भअवदी कहं अ मसेइ । पुनर्निःश्वस्य । अहव कीस भअवदी उवालम्भिज्जइ । जं तस्स जीविदप्पदाइणो जणस्स दंसणादो पहुदि तेसु तेसु सम-एसु दक्खिसहेहिं मह मअणसन्दावेहिं तह णाम क्खिज्जंतो पिअसही महुअरिआविमं एत्थ णिजढं एक्कं णिक्खिविअ अत्ति आअच्छामित्ति णिग्गआ सव्वं एत्थ अदिजुउच्छिए कम्मम्मि पवट्टइ ।

कालिन्दी । सहि रमअन्तिए ! मा एत्थ पडिजला होहि णं भणामि भअवदीए आदेसं आअरेहि त्ति ।

रमयन्तिका । सान्तर्मन्युभारं । अदत्तोत्तरैव तूष्णीमास्ते ।

कालिन्दी । सहि ! सव्वं एव्व तुए हिअअं मि आलो-अणिज्जं पेक्ख जइ एव्वं कीरइ इदो वरं वि मल्लिआए सह एक्क घरणिवासो भविस्सदि ताए क्खु एत्थ परिणए ण किं वि विविदुच्छिअं ।

रमयन्तिका । निःश्वस्य । कालिन्दि ! कहं णाम विवि-दुच्छिउ तवस्सिणी मल्लिआ जस्सो तह पडिजल गअणवासी पमादेण गुरुअणेण अणुंहिआ ।

कालिन्दी । णं तुमं गुरुणा दहराएण दिण्णासि ।

(६) कुप्यत् प्रलम्ब परिपन्थिहलापपात
कुष्यत् कलिन्दतनयालहरी गभीरे
भुग्न भ्रुवो नयनकान्ति नदीप्रवाहे
मग्नमगाश्चिरतरं मकराधितानि॥

कालिन्दी। तदो तदो।

रमयन्ति। तदो अ सो धवलचामरकलापं तरिअं उप्पुंखन्त महुलिह मण्डल पक्खपालि परिक्खित्त कण्णआर क्खिदसुन्दरं वअणं सविब्भमं ईसि उत्ताणं कदुअ विहुडन्त सहस्स पत्त रुइरेहिं सविलासुव्वेल्लिअ तमया लोअण मण्डणेहिं पेम्म मद मुउलन्त पेरन्तेहिं णअणेहिं मं सम्भा-वअन्तो एव्व करकमला अहुडिअ खलि णावट्ठंभमन्थमन्दो-क्किअ तुरङ्गमगई चिरेण तं रच्छं अदिवाहिदवन्दो।

कलकण्ठः। सत्यमुक्तं मधुरवाण्या चिरेणातिवाहि-तवानिति। मधुकरिके! ननु त्वया विज्ञायत एवैतत्।

द्राघीयसीभिरखिलाङ्ग हठार्पिताभि-
रस्याः कटाक्षमय पाश परम्पराभिः।
पश्चादिवाकृष्ट इव तत्र पदेपदेऽहं
कृच्छ्रादलङ्घय मनङ्ग हतः प्रतोलीं॥

मधुकरिके! कथं द्वाविमौ स्तः। ततः प्रभृति पश्य।(७)

---

(६) प्रलम्ब परिपन्थी बलराम इत्यर्थः।

(७) मधुकरिके। कथं द्वाविमौ स्तः। ततःप्रभृति पश्य इत्यत्र टीका। ततः प्रभृति रथ्यालङ्घनादारभ्य इमौ मध्यमाक्षौ द्वौ कथं स्तः स्थितिविशिष्टौ कथं वर्त्तेते इत्यर्थः।

स्फुरति कलयन्नाममग्राङ्गुलीभि-
र्धनुषि मधु विषाक्तान् सन्दधानः पृषत्कान् ।
मम वपुषि परस्मै दर्शयत्यस्त्रशिक्षां
इह चरति सनीडोऽन्योऽप्ययं पुष्पधन्वा ॥ (८)

मधुकरिका । महाभाअ ! णहि णहि इवं एव्व पाइ माणुसं एक्को क्खु मणोभवो ।

कालिन्दी । सहि ! रंधप्पहार णिउणो क्खु मअणो । तदो तदो ।

रमयन्तिका । तदोअ दीहर दीहर णिस्सास पवण गलिउत्तरिज्ज वाअढदिट्ठ ताअट्ठल पअढ कठोर पुलअंकुर णिसिद गाढ मअणाहि सङ्ग विहसिअ पिअसहीअरिमण्डलाढत्त परोप्पर मुहावलोअ वक्क भासिअ वड्ढन्त लज्जासुभावहर सङ्कुलिदिअआ कहं वि पासादसिहरादो अवदरिअ तदो पहुदि कालिन्दि ण जाणामि वाहाए वसिउं केवलं अप्पमेत्त सम्वेअ णिज्ज मत्तण्ड सहस्स संवाद दुव्विसह सन्दाव मिलाअन्त हिअअ कुसुमा णिक्का-

---

(८) स्मितमेवोपपादयति । पश्येति । स्फुटः अविकलयन्त्यां अङ्गुलीभिः आक्षिपन् मधु मकरन्द एव विषं तेनाक्तान् पृषत्कान् धनुषि सन्दधानः । पुष्पधन्वा रति पतिः परस्मै अन्यस्मै मम वपुषि अस्त्रशिक्षां-अस्त्राभ्यास कौशलं दर्शयति । अन्यः इतरः पुष्पधन्वा अनया रमयन्तिकया सनीडः स्थानयुक्तः सन् । नीडं स्थानकुलाययोरिति मेदिनी । रमयन्तिका निष्ठः सन् इत्यर्थः । इह चरति एवं व्यतिरेक भिन्नत्वेन प्रथमभूतस्य मन्मथद्वयस्य सम्भवो लोके प्रसिद्धि विरुद्धत्वात् [illegible] इति भावः ।

आअदुअ णेअ गम्भहिमा सरीरा किंवि किंवि पत्थेदि, अह हंसअ मेत्त विअ पुढम जलहर वरिसपरोहन्त कदम्ब कुमल कठोर रोमञ्च कञ्चुअत्थइअ सअलङ्गी अणिच्छन्ति वि मं सो बलामोड धुत्तो 'तमाल मंसल वच्छत्थल णिम-ज्जिअत्थणा भोअं परिरम्भिअ सविब्भमं कोमल कअंगुलत्ताणिअ लज्जावणअ मं मुह णिवेसिअ सुरहिवअणार विन्दो घदअ दिस मुहहसणकवदं चुम्बइ। इन्दवसणं देइ-अ मे ईसिम्मुउलंत लोअणाअल्ली अप्पणो विब्भम मअन्दम्ब अमुअ णीसन्द महुरं अहर पाणं। सहि इदो वरं णा पारेमि लज्जाए कहिदुं जं सो किदवो अज्ज एव्व विअलन्त णीविबन्दणिरोह दिढ णिहिअ पाणि जुअलं पलाअन्तु कामं वि मं गाढ भुअणे परिरक्भिअ किंवि अविणअं अहिलसइ। अह तक्खणागन्द मुच्छा सुणिअक्करणा अहि बुज्झिअ पेक्खामि पुणोवि एव्व सहो अण विरहए कुसुम सअणिज्जे कुसुमसर सरतप्प विअ सआणं पुण पुण अत्ताणं। इति बाष्पं नाटयति।

कालिन्दी। सहि! रमअस्लिए! जइ संकप्पेसु विअ वेसंदर तिरोहिदो अज्जवि णाअच्छइ पाणे सरो णल-अण्ठो तदो किं णु करिस्ससि।

---

कर्णमूले इ.। तस्य पादमूले इत्यादिना कर्णोदित्वाच्याहय्। जङ्घा-बाभ्यां अह्वार नीवाभ्यां इत्यर्थः। इ.। मापिवसादातीव अन्यतर-कार्मित महाभ्यङ्गाहन्।

रम। निःश्वस्य। अइ आआसअसीले कीस मं पेक्खा-रेसि एव्वं खु तुह्मेहिं मल्लिआवि वहुसो पदारिसा।

कालिन्दी। सवल्गनम्। हंमअन्तिए! मा एव्वं भण सवामि भअवदीए चरणेहिं एसा ऽहं मज्झेव्व रत्तिम्मि तुम कलअण्ठेण संघडइस्सं ता उट्ठेहि गच्छम्ह जाव भअवदी णाअ वच्चइ।

रमयन्तिका। स्वगतं। जं होदि तं होदु पुढमं इमा-दो संकडादो णिग्गच्छामि। प्रकाशं। सहि! कालिन्दि! जइ एव्वं एसा अहं तुइँ वसे वट्टामि।

कालिन्दी। ता एदेण उपवण दुवारेण णिग्गदुअ गच्छम्ह। इत्युत्तिष्ठतः।

मधुकरिका। सहसोपसृत्य। सहि! कहिं णु गमिस्ससि आअदा खु भअवदी एत्थ तुह परिवे।

रम। सावज्ञं। अप्पाणे वच्चम्मि जणावि दीसम्हि। इति झटिति सवाष्पंवसनमाक्रामति।

कल। उत्तरीय काषाय पटमग्रहिलष्य इस्तमवलम्बते।

रम। विलोक्य सकम्पं साध्वसं। स्वगतं। अम्हहि महाभाओ कलअण्ठो। साष्पमिव। मधुअरिए कहिं एत्थ भअवदी।

कल। चरणकमलदासस्येव सद्भाव सख्या

सुमुखि! यमभिधत्से त्वं वलात्कारधूर्त्तम्।
प्रसभ विधुत तर्षः पीडयत्यात्मनैव
शिरद इव सरोजं पाणि मापाटलन्ते।

मधुक। का एत्थ वलामोडी णं पुढमं एव्व तुए कुसुम

तुमं ति मअणिअं एव्वं तेण अप्पाण मोइ एव्व तह पुढमदंसणे एदाए एव्व दिण्णो अप्पा ।

रमयन्तिका । वेपथुं नाटयति ।

कलहकण्ठः । सानन्दम् ।

अहो प्रसन्नो मकरध्वजश्चिरात्
अहो तपोभिः स्वयमेव पच्यते ।
अहो अनुव्रत्वमिदं न निष्फलं
लभे यदेनां ललनामतल्लिकाम् ॥

रमयन्तिका । सबाष्पं । णोमालिए ! कहं णु तुम्हेहिं सम्बरअस्स दिण्णा पिअसही मल्लिआ ।

नवमालिका । मुद्धे ! मामा भयाहि । कर्णे । एव्वं विअ ।

रम । सहर्षं । पिअं णो पिअं णो किं दुवेवि वेसमेत्तेण वञ्चिआ इदासा । इति नवमालिकामालिङ्गति ।

नेपथ्ये । आः दुरात्मन् ! मिथ्यागगन भाषित प्रयोग कृत कात्यायनी छेलन नृशंसशम्बरक पशो ! अयमद्य विशसिष्ये । सर्वे सहर्षमाकर्णयन्ति ।

पुनर्नेपथ्ये । हा हतोऽस्मि मन्दभाग्यः । हन्त मुधा कामुकेन मया मल्लिकेति कश्चन भूतएव परिणीतः ।

कल । हन्त मकरन्देनैव माकरन्दनाम्ना महापुरुषेण शम्बरकस्य निहननम् ।

पुनर्नेपथ्ये । हा भगवति ! मन्दाकिनि ! मोचयस्व मां भिन्नस्य इव गात्राणि ।

कल । हताश । कात भवती ।

पुनर्नेपथ्ये । भगवति ! पश्चिमायस्य भूयोऽप्यनर्घाणि काषायाणि दास्यामि ।

कल । मूर्ख ! इदमस्य काषायस्य फलमेतत् ।

पुनर्नेपथ्ये ।

क्रोडात् केलिगृहं कथञ्चन वधूर्याताद्य या सा पतिं
दृष्ट्वा शृङ्खलया निबध्य पदयोः कृष्टा नभस्युज्झिता ।
कष्टं कष्ट ममुं तमालविटपे बद्धा तिरोऽभूद् बलात्
जामाता यमधो मुखो बत वहन् वेतालवल्लम्बते ॥

सर्व्वाः । सहर्षं । अच्छरीदु हदासो अत्तणो दुव्विणीए फलं ।

कल । हन्त सर्वतो हाहाकार मुखरं अमात्य विष्णुरात भवनं ।

पुनर्नेपथ्ये ।

भो भो कञ्चुकिनस्तथा परिजना ! मा भैष्ट माक्रन्दत
अमात्यो न पिशाच एष मनुजाम्बुजा रटन् धावति ।
मथ्या छिन्न वपुर्विभिन्न वदनो व्यामुक्तकेशो न्वहं
जामाता कलपिङ्गकोऽपि विकृतं निर्याति शय्यागृहात् ॥

सर्व्वाः । साहु भमरअ ! साहु ।

प्रविश्य ससम्भ्रमो भ्रमरकः ।

भ्रमरकः । सानन्दं । विलोक्य । हन्त तथा साहु कल-कण्ठे ! एव्व वि रमअन्तिआ । उपसर्पति ।

सर्व्वाः । विलोक्य सहर्षं । एहि भमरअ ! तुरिअं कहेहि । कथितं । भ्रमरक । किमनुष्ठित कार्य्यः प्रतिनिवृत्तोऽसि ।

भ्रमर । णाह ! को णाम अणणुट्ठिअ कज्जो णिवट्टइ णाहस्स परिअणेसु ।

काल । तत् कथय किमत्र क्रिया इति ।

भ्रम । तदो सञ्जाघरं गदुअ भूयोवि कलह णाडुण णावुढ़ो पुणो पुणो चलण दाससस तस्स तक्खण सुमरिद विविहा वराह समुज्झिम्मिअ रोस निट्ठुर चिविड़ ताडुण णिब्भिस सव्वङ्गं पुढ़मं एव्व मड्डुअरिआए मव्ववेरम्स णिक्खित्तं मसि भण्ड' घेत्तुण अहिसित्त वन्दोह्मि किं वहुणा तह णिक्कासिदो सो हदासो । जह णं विसक्लिन्ति लोआ परिहरन्ति ।

सर्व्वाः । विहस्य । अस्सहा वि त' विसक्लिन्ति परिहरन्दि एव्व ।

भ्रमरकः । अह अड्ढ मुक्क णिद्दाणं चेडअ वरिस वट्ठाणं पवुट्ठे कोलाहले अहंवि पक्खमिप्पईवो तिरो णिमदुअ तक्खणं तमाललम्बिअं संवरअं किं दाणिं ति णिव्विअ कधें जक्खन्ति आअदह्मि ।

काल । साधु भ्रमरक ! साधु ।

यदृयूयुजः भ्रवृत्तिकारेण यत्नाप्य साल एवागतोऽसि ।

मधुकरिका । महाभाग ! इदोवरं मह्माणं अवे सणं सव्वविसुसदि ता एदेण उपवण दुवारेण णिग्गदुअ मल्लिणा समीवं एव्व गच्छह्म ।

काल । तदप्यंथ मार्गं ।

मधु । इदो इदो । सर्वे निर्गमं नाटयन्ति ।

काल । सर्यसुखमनुभूय ।

(१०) एष क्रीड़ान्त ताम्यत् कुसुमपुर वधूवक्त्र सौरभ्य बन्धुः
मुग्धं निद्राजड़ानां रसितमनसरो द्राघयन् सारसानां ।
आवात्यङ्गानुकूलस्खलित विचकिलश्रेणि गन्धानु धाव-
ल्लोलम्बोद्घुष्यमाण स्मरजय विरुदाडम्बरो मातरिश्वा ।

इति मल्लिकामारुते सप्तमोऽङ्कः ।

---

(१०)प्रभातं वर्णयति एष इति । क्रीड़ान्तताम्यत्कुसुमपुर वधूवक्त्र सौरभ्य-बन्धुः मित्रं सहाय इति यावत् यस्य स तथोक्तः । बन्धुः स्यात् पुंसि बन्धूके मित्रे भ्रातरि बान्धवे इति मेदिनी ॥ उपकण्ठयर्त्ति कुसुमपुर योषिद्रतान्त जायमान क्लमनिःश्वासाऽनुभवभूत फणिमिश्र फूत्कार सदृश सुगन्धि सुखमन्दानिल संमिलित इति भावः । अत्र क्रीड़ान्त ताम्य-दिति विशेषणेन वर्त्तमान रतान्त क्रान्ति वैशिष्ट्य प्रतिपादनात् तुर्ययाम गतोत्सुकत्वावगतेः सर्वासामपि कुसुमपुर स्त्रीणां पद्मिनीत्वं द्योत्यते तथा चोक्तं । रमयति रमणीयां पद्मिनीं तुर्ययामे इति । अनुसरः प्रति-कासारं निद्रया अवशिष्ट निद्रयेत्यर्थः जड़ानां मन्थरानां सारसानां पक्षि-विशेषाणां रसितं द्राघयन् दीर्घीकुर्वन् स्खलितानां विचकिलश्रेणीनां मल्लीविशेषराजीनां गन्धैः गन्धाय वा अनुधावन्तो ये लोलम्बा भ्रमराः तैः उद्घुष्यमाणः स्मरजय विरुदाडम्बरः यस्मिन् स तथोक्तः । मात-रिश्वा गन्धवाहः अङ्गानुकूलः आवाति मन्दं मन्दं चरतीत्यर्थः ।

इति मल्लिकामारुतव्याख्याने परिमलाख्याने सप्तमोऽङ्कः ।

## अथ अष्टमोऽङ्कः ।

ततः प्रविशति मन्दाकिनी माकन्दश्च ।

मन्दा । ततस्ततः ।

माकन्दः । ततश्च तं तमालविटपालम्बं अधोमुखं बद्धा तिरो भूयागतोऽस्मि ।

मन्दा विहस्य । वत्स ! समुचितमनुष्ठितं । वत्स ।

अद्य प्रसीदति मनो मम मारुतेन
यन्मल्लिकाकरमजिघ्रदमीप्सितेन ।
यच्चानुरूपमिदमापयमेतदस्मि
साङ्कौटिना चरणदुर्ललितस्य भर्तुः ॥ (१)

ततस्ततः ।

माकन्दः । अथागच्छन्नेव रमयन्तिका सहायं नव-मल्लिकादिभिः सखीपवनान्निभृतं निर्गच्छन्तं कलकण्ठ-

---

(१) अद्येति । अद्य त्वदीय समुचितानुष्ठान श्रवणानन्तरं मम मनः कर्तृ प्रसीदति चिन्तादिविरहेण प्रसन्नं भवति । यत् यस्मात् कारणात् ईप्सितेन वरत्नेन अभिलषितेन मारुतेन मल्लिकाकरं कर्म्म अभिमतं अपादयमित्यर्थः ।

यच्च यस्माच्च । एतस्याः मल्लिकायाः आप्तौ विषये सङ्कुटिनो भावः । साङ्कौटिनं कपटित्वं तस्य आचरणेन दुर्ललितस्य धूर्त्तस्य भर्त्तुः शम्बरकस्य अनुरूपं अपराधस्थले दण्डन न्यायेन कृत प्रतिकृत न्यायेन च सदृशं इदं निर्वर्त्तित बद्धपद्रूपं तमालविटपे अधोमुख बन्धन-रूपम् । प्रतिकृतमित्यर्थः । आपयं अवलभेयं तस्मात् मनः प्रसीदतीति पूर्वेण सम्बन्धः ।

मालोक्य भगवत्याः प्रथम प्रिया वेदकः स्यामिति झटित्या-गत एव। न पुनस्तेषां आत्मानं प्रकाशित वानस्मि।

मन्दा। हर्षातिशयं नाटयन्ती। वत्स! अवाङ् मनस-गोचरोऽयं मनोरथा वाप्ति जन्मा महानन्दः।

माक। भगवति! युज्यत एतत्।

न वयम्बदयापि नाक लक्ष्म्या नच वित्तेन तथा सुधारसेन।
प्रसद्भजते मनः स्वयं परिपूर्णेन यथा मनोरथेन॥

परितो दृष्ट्वा। क्वाद्य मल्लिकामारुतौ।

मन्दा। मारुतः प्रागुपवनान्निर्गतः स्वपरिजनान्वेषण-शङ्कया स्कन्धावारमेव गतः सारसिकयाद्य गूढमानीतः समीपवर्त्तिनि लताभवने वर्त्तते। मल्लिका तु मयावा-नीता। अद्य सारसिकयैव तत्समीपं नीयमाना इतो निर्गता। सानुकम्पं।

निःशङ्कमुत्कलिकया पुरतो विकृष्टा (२)
निर्व्याजया मुहुरपत्रपया च पश्चात्।
सा पुष्पकेतुशर पीड़ित कोमलाङ्गी
वाला कथञ्चिदुपकण्ठमगाद्विवोढ़ुः॥

मकरन्दः। हन्त! तिरयत्येव भीति मङ्गनानां प्रिय-जनानुरागः। तथाहि।

या मन्दिरे परिजनेन्दुमुखीवराज
माङ्गल्यदीप शतमण्डित पार्श्वदेशा।

---

(२) उत्कलिकया उत्कण्ठयेत्यर्थः। अथवत्कण्ठोत्कलिका उत्कलिका रतिचरचारणक इति हलायुधः।

चंक्रम्यते किमपि सेय मिहान्धकारे
याता स्वयं रमण सन्निधि मवसन्ती ॥ (३)

माक। सहर्षं। तदनुमन्यतां भगवती मां हिमाचल प्रस्थ प्रस्थानाय। यावदमुनोदन्तेन विद्याधरामात्यमानन्दयामि।

मन्दा। स्मृत्वा। साशङ्कं सवष्टम्भम्। हन्त विस्मृतो मया तत्तदुपाय व्यापृत चित्तया मूर्च्छाहरस्य वत्सायाः सीमन्तमणे राक्षस व्यतिकरे भ्रंशः। सनिर्वेदं। (४) धिक् कष्टमिह महान् प्रमादः। क्वेदानीं मन्विष्यामि। इत्युत्तिष्ठति कर्णं दत्त्वा। अयमसौ भगवत्याः प्रथमः किमपि व्याहरति। आकाशे लक्ष्यं बद्ध्वा। भद्र! किं ब्रूषे?। स खलु मणिस्तस्यां निशि अन्येन खड्गजिह्वनाम्ना रक्षसा गृहीतोऽनुद्रवद्भिरप्यस्माभिर्न समासादित इति। विषादं नाटयति।

पुनराकाशे। भद्र! भूयः किमात्थ। अथ द्रविडेषु काञ्चीपुर सविधेन धावं स्तत् कालोपस्थितेन देव्याः कामाख्याः किङ्करेण निहतः स यातुधानः आच्छिन्नश्च तेनैव समणिरिति। सोच्छ्वासं। विहस्य। अयमवसरो मम योग विद्या प्रकटनस्य। यावत् सम्भावित भावि मूर्च्छागमां मल्लिकामेव काञ्ची पुरं नयामि। इति निष्क्रान्ता।

ततः प्रविशति लतामूलस्थो मारुतः।

---

(३) अवसन्ती निर्भया सतीत्यर्थः।

(४) सनिर्वेदं। दुःखादिजनित निष्फलत्वधिया स्वावमानमित्यर्थः।

मारुतः। सहर्षं। अवश्य मद्यानेष्यत्येव मल्लिकां सारसिका। औत्सुक्यातिशयं नाटयन्।

नीतास्ते दयितासि संशयकृतः कल्पोपमा वासरा
प्राप्ताच प्रथमोर्जितेन तपसा प्राणेश्वरी मल्लिका। (५)
नेदीयांस मवैमि सम्प्रति तया सङ्गं तथाप्यन्तरे
यः कश्चित् चणमस्ति सोऽपि विरहो हा हन्त मे दुस्तरः॥

विमृश्य। अथवा चेत एव दुस्तरं मन्यते यावदेत-दाश्वासयामि।

अये चेतो धैर्य्यं धर विधुरतां मास्म भजथा
ननु प्रत्यासन्नो भवति दयिता सङ्गम महः। (६)
तथानामोत्तीर्णे महति विरहे पक्ष्मपतुटि
व्यवच्छिन्नं (७) कालं किमिति युगदीर्घं कलयसे॥

निःश्वस्य। हन्त उत्तरोत्तरमुत्कृष्यमाणे मान्मथे प्राचण्ड्ये किं करोतु तपस्वि (८) चेतः। तथाहि।

---

(५) प्रथमार्जितेन प्राक् सम्पादितेन तपसा दुष्प्रापप्राप्तिसाधनभूतेन कर्मविशेषणेनेत्यर्थः। उक्तञ्च मनुना। यद्दुष्करं दुरापञ्च यद्दुर्गं यच्च दुस्तरं तत्सर्वं तपसा प्राप्यं तपो हि दुरतिक्रममिति।

(६) दयिता सङ्गम महः दयिता सङ्गमोत्सवः। मह उद्धव उत्सव इत्यमरः।

(७) पक्ष्मपतुटि व्यवच्छिन्नं लघ्वक्षरोच्चारकालस्तुटिः पक्ष्मवा पञ्च्वा पक्ष्मपाः बहुव्रीहौ संख्येये डच बहुगणात् इति डच डिति चेति टिलोपः। ताश्च ताः तुटयः काललवाश्च ताभिर्व्यवच्छिन्नं तत्परिमितिं यावत्। माद्ये कालव्ये तुटिरिति नानार्थ रत्नमाला।

(८) तपस्वि करुणास्पदं शोचनीयमिति यावत्। करुणाप्रतिपादने तपस्वी चेति रुद्रः।

आरभ्य तस्याः प्रथमावलोकात्
अस्त्राणि यावन्त्य मुचन्मनोभूः ।
तावन्ति तेभ्योऽप्यधिकानि चाद्य
प्रयुङ्क्त येक क्षणमात्र एव ॥

परितो विलोक्य । इन्त सूचिभेद्यैः रन्धकारैरभिव्याप्त-मेक तमालोद्यान तुल्यं भुवनं । सकरुणं । कथमपि दूरा-दपराश्रमादस्मिन् समये समेष्यति कोमलाङ्गी ।

दूयेते शिव शिव यौ सरोजताम्रौ
सैरन्ध्री करतलदत्त लाक्षयापि ।
पादौ तौ तिमिरविसंष्ठुले स्थलेऽस्मिन्
सञ्चारं चकित दृशः कथं सहेते ॥

अथवा नाति शोचनीय मेतत् ।

चरणौ नयने तमः प्रकाशो वनिता नाम सहायता वयस्था ।
अपिच प्रिय वल्लभाभिसारे भवन प्राङ्गण कुट्टिमः कदध्वा ॥(८)

नभोविलोक्य । अये ! उत्कण्ठिते वेयं मल्लिकायाः सरणिं प्रकाशयन्ती दीपिकेव विद्रुम भङ्ग पाटला ज्योत्स्नावल्ली

---

(८) चरणाविति । वनितानां प्रियवल्लभाभिसारे विषये चरणौ नयने नयनवत् मार्गप्रदर्शके इत्यर्थः । तमः प्रकाशः प्रकाशवत् गमन-प्रतिबन्ध प्रतिपन्थि इत्यर्थः । असहायता वयस्था सखी सखीवदभय-प्रदानपूर्वकं नायक सङ्गम सम्पादयित्रीत्यर्थः । अपि च कदध्वा कापथः कण्टककाभन चुद्रजीवाद्यावृतमार्ग इति यावत् । भवनप्राङ्गण-कुट्टिमः वेश्मप्राङ्गण निबध्व भूमिः । कुट्टिमोऽस्त्री निबद्धा भूरित्यमरः । भवन प्राङ्गण कुट्टिमवदनायास गमनार्ह इति यावत् । अत्र चरणौ नयने इत्यादिषु सर्वत्र व्यस्तरूपकम् ।

निर्वर्ण्य ।

नवकुङ्कुमचर्चिका रजन्याः गगनाशोकतरोः प्रवालपङ्क्तिः
मणिकुन्तलता स्मरस्य मन्ये शशिनः प्राथमिकी मयूखलेखा । (१०)

प्राचीं विलोक्य सकौतुकं ।

अयमुदयति चन्द्रो वारिधेरम्बुगर्भा-
दमृतकणकरालैरंशुभिर्दीप्यमानः ।
जलधि(भुजग)शयनवक्षो हर्म्यदेशे ललन्त्या
वदनमिव यदृच्छोत्तानितं विश्वमातुः ॥ (११)

अपिच । उज्जृम्भते कुमुदिनी सुकृतं मृगाङ्को
विष्वग्विकीर्णपरिपाटलरश्मिदण्डः ।

---

(१०) नवकुङ्कुमेति । शशिनः प्राथमिकी मयूखलेखा रजन्याः रजन्याख्यस्त्रियः नवकुङ्कुमचर्चिका गगनस्यैव शोकतरोः प्रवालपङ्क्तिः स्मरस्य मणिकुन्तलता मन्मथोपयोगी मणिमय कुन्ताख्यायुधविशेषः इत्यर्थः । इति मन्ये इत्यन्वयः । इह मालानिरवयव रूपकमलङ्कारः । अत्र अव्याख्यातेषु एतद्ग्रामवर्णीवराह वलयं विश्वैकवीर स्कन्धावार मदान्ध सिन्धुरकुलं श्यामावधूं कैशिकमित्यादिषु स्थलेष्वपि अयमेवा-लङ्कारो बोध्यः ।

(११) अयमिति । अमृतकणकरालैरंशुभिर्दीप्यमानः अयं चन्द्रः भुजग शयन वक्ष एव हर्म्यः तस्य देशे ललन्त्याः विलसन्त्याः विश्वमातुः लक्ष्म्याः यदृच्छया उत्तानितं उन्नमितं वदनं मुखमिव इत्युत्प्रेक्षा वारिधेः अम्बुगर्भात् उदयति । भुजगशयनेत्यत्र जलधि शय-नेति पाठे वारिधि वारिगर्भोदये साभिप्रायत्वात् विशेष एव । उत्प्रेक्षा लक्षणन्तु । यत्नान्यधर्मसम्बन्धात् अन्यत्वेनोपतर्कितम् । प्रकृतं हि भवेत् प्राज्ञास्तामुत्प्रेक्षां प्रचक्षते इति ।

उत्सूत विद्रुमकुलो जलधेस्तरङ्गा-
दुत्क्षिप्यमाण इव कश्चन राजकम्बुः॥ (१२)

निर्वर्ण्य।

हन्त गलित एवोदय रागः। साकूतं।

अनुसर्त्तु मना मनाङ्मनोज्ञं किमपि श्वेतत एष शीतधामा।
वदनं निखिलोपमान दूरं मदनान्तकविपाण्डु मल्लिकायाः॥(१३)

निःश्वस्य। यावदेनं दुर्लभार्थं प्रार्थन दुर्ललितं किञ्चिद्-
ब्रवीमि।

अभिलषसि यदीन्दो वक्त्र लक्ष्मीं मृगाक्ष्याः
पुनरपि सकृदब्धौ मज्ज संक्षालयाङ्गं।
सुविमलमथ बिम्बं पारिजातस्य गन्धैः।
सुरभय वद नो चेत्त्वं क तस्या मुखं क॥ (१४)

---

(१२) उत्सूतानि। उपरि विकीर्य्यमाणानि विद्रुमकुलानि येन स तथोक्तः। जलधेस्तरङ्गात् उत्क्षिप्यमाणः कश्चनः राजकम्बुः शङ्खोत्तम इव इत्युत्प्रेक्षा उत्सूतपदस्य वर्त्तमानार्थकत्वन्तु मति बुद्धि-पूजार्थेभ्यश्चेति च शब्दस्य अनुक्त समुच्चयार्थकत्वात् अतएवाह हस्ति-कारः। सुप्त शयितेत्येवमादयो वर्त्तमाने द्रष्टव्याः इति।

(१३) मनोज्ञं वदनं अनुसर्त्तुं मना किमपि अनिर्वचनीयतया श्वेतते शुभ्रो भवतीत्यर्थः। मल्लिकावदनमनुसर्त्तुं मना इत्युक्त्या साकूतत्वं बोध्यम्।

(१४) अभिलषसीति। हे इन्दो! मृगाक्ष्याः वक्त्रलक्ष्मीं अभि-लषसि यदि पुनरपि अब्धौर्मध्ये स्थितत्वात् पुनरपीति पदं अब्धौ सकृत् मज्ज अवगाहस्व। अङ्गं स्वदेहं संक्षालय प्रक्षालय अथ प्रक्षालना-नन्तरं सुविमलं बिम्बं कर्म पारिजातस्य पारिजातकुसुमस्य गन्धैः

अथवाद्यैवागताया स्तस्याः सुरभि सुन्दरं वदनं प्रदर्श्य त्वां संवादयामि । (१५)

कर्णं दत्त्वा । सहर्षं । हन्त आगतैव प्रेयसी ।

इदमिदमलसाद्या श्रूयते मञ्जुतारं
जघनभरगताया झं कृतं मेखलायाः ।

पुनः कर्णं दत्त्वा सविषादं ।

नहि नहि विधुबिम्बे बध्नतां स्वीय बुद्धिं
सरसि सरसि सोऽयं निस्वनो हंस यूनाम् ॥ (१६)

नेपथ्ये । इदो इदो ओणहिपाविदेण मग्गेण मन्दं एदु पिअसही ।

मारुतः । आकर्ण्य । सानन्दं । सत्यमागतैव मल्लिका ।

---

दामोदैः सुरभयः (कुवलयानन्दे विषमालङ्कारोदाहरणस्थले पारिजात प्रसूनैरिति पाठो दृश्यते) नो चेत् मज्जन कलङ्कपातेन बिम्बसुरभीकरणाभावे इत्यर्थः । त्वं कलङ्कत्व निर्गन्धत्व दोषविशिष्ट इति भावः । क मस्याः सुखं सुरभि सुन्दरमिति भावः । क परस्परमननुरूपमित्यर्थः । सदा दुर्लभमेव त्वत् प्रार्थनं स्यादिति भावः । विषमालङ्कारः विषमं वर्ण्यते यत्र घटनाननुरूपयोरिति लक्षणात् ।

(१५) विमलत्व सुरभित्वयोरुभयोरपि गुणयोः सत्त्व एव तदङ्क लक्ष्मीः प्राप्येति प्रागुपन्यस्तेऽर्थे संशय निराकरणायाह अथवाद्यैवागताया इति संवादयामि अङ्गीकारयामीत्यर्थः ।

(१६) नहि नहि मेखला झं कृतं नेति भावः । किं तर्हीत्यत आह । सोऽयं श्रूयमाणः विधुबिम्बे स्वीयः स्व यूथ्यो हंस इति बुद्धिं बध्नतां सरसि सरसि प्रतिसरः स्थिद्यमानानामिति शेषः । हंसयूनां निस्वनः इति सम्बन्धः ।

श्रूयते खलु पश्चिमतो लतान्तरितः सारसिकायाः स्वरः ।
विलोकनं नाटयति । पुनर्नेपथ्ये ।

जोण्हाहिं ण्हावयन्तो दिणअर किरणक्के र ढड्ढं पवञ्चं ।
इसुब्भिसन्दं णीलुप्पल पअलिम लोलम्ब वाम्रालिम्रासो ।
एसो दिट्ठो मिअङ्को पहिम हिअअ सम्मोहणो रोहिणीए ।
सेच्छारद्धयणा लिङ्गण विलुलिम कत्थुरिम्रा संकि अङ्को ।*

मारुतः । विलोक्य साभिलाषम् ।

इयमभिसरत्याराद्‌क्रैरनङ्गहतैः प्रियाः
चकितचकितां विन्यस्यन्ती दृशं मम लाञ्छने ।
अलघु विपुलश्रोणी भारालसालसचंक्रम
श्रमसमुदित खेदच्छेदाभिराम मुखाम्बुजा ॥

निर्वर्ण्य । हन्त चन्द्रिका पात सविशेष मण्डितानि तन्वङ्ग्या अङ्गकानि । तथाहि

चन्दनचर्चास्तनयोर्धम्मिल्ले मल्लिका दाम ।
क्षौमं नितम्बबिम्बे चन्द्रकरा वाममध्यायाः ॥ (१७)

---

*ज्योत्स्नाभिः स्नापयन् दिनकर किरण क्रौर्य दग्धं प्रपञ्चम् ।
ईषदुद्भिन्ननीलोत्पल प्रचलित लोलम्बवाचालिताशः ।
एष दृष्टो मृगाङ्को पथिकहृदय सम्मोहनो रोहिण्याः ।
स्वेच्छारब्ध स्तनालिङ्गन विलुलित कस्तूरिका शङ्कितांकः ।

(१७) चन्दनचर्चेति । चन्द्रकराः चन्द्रकिरणाः वाममध्यायाः स्तनयोः चन्दनचर्चा । धम्मिल्ले कचभरवन्धविशेषे मल्लिकादाम नितम्ब बिम्बे क्षौमं इत्यन्वयः । अत्र चन्द्रकराणां स्तनादिविषयभेदेन चन्दन-

विहस्य। अहो विश्रिष्टवस्तुभिलाषो मञ्जूनाम्। इतीहि।

अहतः प्रथाङ्कविरणान् पिपासवः सुरभिलां सुख-ज्योत्स्नां चंचूर्यन्ते (१८) परितश्चकोरपोताश्चकोराश्चौ।

पुनर्निर्वर्ण्य। सस्मितं। न केवलं चकोर एव।

स्वयमयमपि चन्द्रः प्रागुपालब्ध कान्तिः
पिण्ठिषु रभिरामां सुभ्रुवो वक्त्र लक्ष्मीम्।
अविरल भवदध्व खेदलेशानुकीर्णं
प्रतिफल नमिषेण प्रासवान् गण्डमूलम्॥ (१९)

यावदहं प्रत्युद्गच्छामि। अथवा नैव स्थितः सुललितमस्या आगमनं निर्वर्णयामि।

ततः प्रविशति यथोद्दिष्टा मल्लिका सारसिका च।

मल्लिका। स्वगतं। अज्ज पुढमं अज्ज उत्तं अहि सरन्ती वरवसम्हि असज्झेहिं लज्जाकोलाहलेहिं।

---

अर्थेत्यादि बहुप्रकारोल्लेखात् उल्लेखालङ्कारः। एकेन बहुधोल्लेखे-ऽप्यसौ विषयभेदतः इति लक्षणात्।

(१८) चञ्चूर्यन्ते पुनः पुनरतिशयेन वा चञ्चुरन्तीत्यर्थः। चर इति भक्षणयोरिति धातोरेकाचो हलादेरिति यङन्तात् सनाद्यन्ता इति धातुत्वाल्लट् ङिदन्तत्वात् अनुदात्त ङित इत्यात्मनेपदं चर फलो-रित्यभ्यासस्ते नुक्। उदुपधात्वात इति अभ्यासात् परस्यात उत् हलि चेति दीर्घः।

(१९) अविरलं यथा तथा भवद्भिः उद्भवद्भिः खेदलेशैः अनुकीर्णं गण्डमूलं वक्त्रं प्रतिफलनमिषेण प्राप्तवान् इति योजना कैतवापह्नुति रलङ्कारः। कैतवापह्नुतिर्व्यक्तौ व्याजाद्यैर्निह्नुतेः पदैरिति लक्षणात्।

सार। इदो इदो। इति परिक्रामतः।

सावत:। साभिलाषं। इयं खलु।

उत्तुङ्गस्तनभर तान्त तान्त मध्यं
विस्निग्धद्घनकच वान्त वान्त सुनम्।
वन्नाज भ्रमदलि भीत भीत नेत्रं
मुग्धाची मम धुरि मन्द मन्द मेति॥

मल्लिका। सहि सारसिए! कहिं णु अज्जउत्तो वट्टइ। उक्कण्ठइ मह चन्द दंसणप्पेइणा दिट्ठी अज्जउत्त मुहार-विन्दं दट्ठुम्।

सार। सानन्दं।

अद्य हि सफलं यौवनमद्यहि देवः स्मरः प्रसन्नो मे।
अभिधेयोऽस्मि यदस्या रमणीयस्यार्थपुत्रशब्दस्य॥

सार। सहि! समीवं चिय वट्टइ आअच्छेहि पञ्च-साणि पआणि।

मल्लिका। सव्रतम्। पञ्चाइ अज्जउत्त दंसणुस्सिआए मह पञ्चपअ परिमिदोवि दुलंघो एव्व पदेसो। पञ्चाणि पदानि गत्वा परितो विलोक्य सविषादं। सहि सारसिए! मिच्छा कहेसि एत्थ वि ण दीसइ अज्जउत्तो।

सार। सिद्ध। सहि मल्लिए! सच्चं तुह विशाल तुङ्गेण णिअम्बभरेण किलन्ताए णव पल्लव कोमला चरण लोआ तहवि पत्थेमि। पुणोवि किञ्चिम्म पअदो आअच्छ। अङ्गुल्या दर्शयन्ती। एत्थ पेक्ख णादि दूर वट्टिणि लदा मूले सण्णिहिट्ठेण होदव्वं।

मल्लिका । साकूतं । जदि एव्वं ता सहिओ सयिाउं गच्छन्तु । अविसादेव्व महुअ परिरम्भणं अज्जउत्त । इति पदान्तरं गत्वा सलज्जं तिष्ठति ।

मारुतः । अटित्युपसृत्य ।

सोढुमलमस्मि नाहं सुन्दरि ! मन्दागमा विलम्बं ते ।
पञ्चशरास्त्र हतं मां सञ्जीवय चारुगात्रि ! परिरम्भैः ॥

इति मल्लिकाया हस्तं ग्रहीतुमिच्छति ।

मल्लिका । ईषद्वामन्दं । स्वगतं । अम्महे सयं एत्थ आअओ अज्जउत्तो । ससाध्वसलज्जमपक्रामति ।

सार । सहि ! एत्तिअं समअं तह तह णाम उव्वुआ भविअ एहिं उण हत्थग्गहणे वि अणिअ सम्भमा धावसि ।

मल्लिका । अन्तिकान्तरेव सलज्जं तिष्ठति ।

मारुतः । सस्पृहं । स्वगतं ।

अस्याः स्थितं किमपि सम्प्रति लोभनीयं
नम्र भ्रुवो नमित मुग्धमुखारविन्दम् ।
मन्दाच मन्थर विलोल विलोचनाञ्च
च्छायाचलच्छुरणमाहलितस्तनायाः ॥

विमृश्य । भवत्वेवं तावत् । प्रकाशं । प्रिये ! मा तावत् कराबलम्बः । एतत् पुनस्तु मन्तव्यं मे । (२०)

---

(२०) यथात् सर्वकामिजनसाधारणं (मदनवचनदृष्टो मानिनी मानभेत्ता) इत्यादि वचनैः रतिमन्त्रविदग्धत्व वचनं द्विप्रकारक सम्भोगाङ्गतया आवश्यकत्वेन कामवेदविहितं आत्मविषयकदत्त वैशिष्ट्ये च चतुर्विधोपायात्मकं नायक कर्तृक चाटुवचन प्रकारम् । तथा नायिका

मल्लि । सव्रीडं तिष्ठति ।

सार । महाभाग्र ! ण सुणादि एसा मह वअणं ता तुमं एव्व भण ।

मारुतः ।

(२२) उत्सङ्गोऽयं विपुलजघने भूषयत्येष पाणिः
संवाहाय स्पृहयति शनैरर्पयस्वात्र पादम् ।
वक्षस्यस्मिन्नपि च कुचयोः स्वैरमारोप्य भारं
सख्याऽसख्योल्लिखित विभवं मध्य मुल्लाघयस्व ॥

मल्लिका । स्वगतं । हन्त । महुर महुरा अज्जउत्तस्स वाउपरिपाडी । सारसिकया सह शिलातले एव उपविशति ।

मारुतः । स्वगतं । हन्त लज्जावती प्रस्तर एवोपविष्टा उपालभे तावत् ।

---

(२२) उत्सङ्ग इति । अयं उत्सङ्गः हे विपुलजघने ! एनं इति शेषः । एनं उत्सङ्गं भूषयस्व जघनसंस्थापनेन अलङ्कुरु इत्यर्थः । एष पाणिः संवाहाय स्पृहयति । अत्र पाणौ पादं शनैः न तु जवात् अर्पयस्व । अतिमात्र मृदोः पादस्य पाणितल परुषस्पर्शबाधां सोढुमक्षमत्वादिति भावः । ततः कर्त्तव्यं विशेषमाह । अपि च किञ्च अस्मिन् वक्षसि कुचयोर्भारं स्वैरं स्वच्छन्दमारोप्य मध्यं कर्म्म सख्याऽसख्यः सख्याऽसख्यः उल्लिखितः तनूकृतः उत्कीर्णं तनूकृतमथोल्लिखितमिति नानार्थ रत्नमाला । विभवः सामर्थ्यं पाटवमिति यावत् । यस्मिन् कर्म्मणि तच्छ्रया भवति तथा ह्रत्यन्त मन्द मन्द सम्पर्कि तयेति भावः । उल्लाघयस्व उपरिष्टाद्वारयेत्यर्थः । अनेन हंसनामा बन्धविशेषो व्यज्यते । तदुक्तं शृङ्गार प्रबन्धप्रदीपे । अर्द्धोत्थितोर्द्ध्वदेहायाः स्फुटीकृत पदद्वये । आसीनेन कृतं यत्तु हंसबन्धस्तदुच्यते । तत्राङ्गना प्रणयिनः करयोः स्वपादौ योक्त्रे स्वयोनि सरसि स्वसरोजतुल्यं संयोज्य कण्ठलुठिता प्रविचालयेत् स्वां-श्रोणीं भवेत् सुखपदं स च हंसबन्ध इति ।

मुग्धे ! नूतनकर्णिकार कुसुमापातादपित्रस्यसि
पाषाणासिकया किमित्य करणे प्रख्यापयस्यङ्कम् ।
यद्यात्मीयमिति भ्रमस्तव महान् प्रागेव मासीदपि
त्वद्यारभ्य ममैव तत्तव पुनर्ज्ञातव्यमेतद्वपुः ॥ (२३)

मल्लि । सहर्षं । स्वगतं । अज्जउत्तस्स एदन्ति महन्तो पेम्मोग्रयि सरीरे वि। कथा पिवेड तुम्हे पेअसं । सौत्सुक्यं । अज्जिओ तुम्हे उथ तह थाम परोक्खे उक्कण्ठिआ भविम, अज्ज सण्णिहिदे अज्जउत्तो अप्पाणं वञ्चेइ । इति किञ्चिदिव हृष्टा मुखञ्जं व्यावर्त्तते ।

मारुत: । सरोमाञ्चं । स्वगतं । हन्त अतिसुकुमारमणीयः प्रेयस्या भाव व्यतिकरः ।

अद्यागया प्रिय सखीमपि वञ्चयित्वा
मुग्धारविन्दमधुरं मुखमुन्नमय्य ।
दृष्ट्यापि नैव विदितः सुदृशा कटाक्ष-
क्षिप्तक्षणं मयि पुनः प्रति संहृतश्च ॥

विमृश्य । एवं मन्ये ।

---

(२३) मुग्धे इति । हे मुग्धे ! मूढे ! नूतन कर्णिकार कुसुमापातादपि तन्नु कातरं इदमङ्कं कर्म हे अकरणे ! किमिति कस्मात् पाषाणासिकया पाषाणे आसिकया स्थित्वा प्रख्यापयसि इदमिति शेषः इदमङ्कं आत्मीयमिति यदि स्वीयमिति मन्ये इत्यर्थः । तव महान् भ्रमः बुद्धिव्यामोहः । अन्यथा नैवं ब्रूया इति भावः । तर्हि तद्युष्मदीयमित्यत आह । एवं आत्मीयत्वेनेत्यर्थः प्राक् पुरा आसीत् । अपि तु किन्तु तत् त्वदीयमङ्कं अद्यारभ्य ममैव एतद्वपुः पुनः करनिर्दिश्यमानं मदीयमङ्कं त्वित्यर्थः । तव तत् सम्बन्धि ज्ञातव्यं इति योज्यम् ।

व्रीड़ा वेला रुद्ध' सागर तोयमिव योषितां हृदयम् ।
रागेन्दुरुदय मानो भूयो भूय स्तरङ्गयति ॥ (२४)

यौवनश्चं । हन्त चेतश्च चिरकाङ्क्षितार्थ साधनेऽपि वैहस्त्यम् । (२५)

मौर्वी दृढ़ार्पित करां निविड़ीकृतोरुं
व्रीड़ानतां तत इतो वदनं हरन्तीम् ।
आरोप्य वक्षसि सुखं परिरभ्य मेनां
वालां बलादभिलषामि न पारयामि ॥

भवतु पुनरपि प्रार्थये । प्रकाशं । अयि ! मल्लिके !

इदं दूर्वाकाण्डद्युति मुविकपोले कतिपयैः
अमाम्भोभिः कीर्णं सहज वकुला मोद सुभगम् ।
समाकाङ्क्षे ताम्राधर मनु मनुष्य प्रियतमे !
मनोज्ञन्ते पातुं मुखकमलमाघ्रातुमथवा ॥

अथवा । वितरच कुचयोस्त्वद्दर्शनोपक्रमाणां
मदन शर रुजानां शान्तये मामकीनाम् ।
सकृदपि परिरम्भं सुभ्रु ! दोर्मूल कुल-
कुष घनपरिणाह व्यातयो रेतयोस्ते ॥ (२६)

---

(२४) व्रीडेति रागः अनुराग एव इन्दुः कर्त्ता उदयमानः सन् व्रीडैव वेला तया रुद्धं योषितां हृदयं कर्म सागरतोयमिवेत्युपमा । भूयो भूयस्तरङ्गयति वर्द्धयति ।

(२५) वैहस्त्यं व्याकुलत्वं विहस्त व्याकुलौ समावित्यमरः ।

(२६) वितर चेति । त्वद्दर्शनं उपक्रमः प्रारम्भः यासां ताः तासामिति रुजाविशेषणम् ।

आस्तिर्यक्‌चटुल मृगाक्षि मन्यसे चेत्
आश्लेषे स्तनतटयोरति प्रसङ्गम् ।
कूजाभिर्विहितरुजौ कुहूमुखानां
वाचा वा शिशिरय वल्गु वाणि ! कर्णौ ॥ (२७)

मल्लि । लज्जाना तूष्णीं भवति ।

मारुतः । विलोक्य । सस्पृहं ।

न निषेधति नानुमन्यते वा वचसा नम्रमुखी ममेप्सितानि ।
अपितु प्रणयप्रमोदलज्जा परिपूर्णं नयनोत्पलं बिभर्त्ति ॥

सार । सहि ! णं तुए एव्व भणिदं भअवत्त अवि-
खादा गडुअ परिरम्भि स्सन्ति ।

मारु । मन्वावयोः प्रथम दर्शन एव बाले !
मालां कुच प्रणयिणी मयि मे व्यतार्षीः । (२८)
अद्यानयोस्तु कुचयोः परिरम्भ दाने
किं चिन्त्यते क्व नु गतः स उदारभावः ॥

अथ यद्येवं न करिष्यसि ।

(२९) स्यन्दन्ते स्मयमान कैरव मधुस्यूतास्व मन्दानिलाः
सन्ध्येते मदनास्त्र पावक शिखास्चन्द्रांशवः प्रांशवः ।

(२७) हे वल्गुवाणि ! मञ्जुलवचने ! इति साभिप्राया सम्बुद्धिः । वाचा वा कुहूमुखानां कोकिलानां कूजाभिः विहितरुजौ कर्णौ कर्म्म शिशिरय इत्यन्वयः ।

(२८) व्यतार्षीः । अदाः इत्यर्थः विपूर्वात् तृधातोः कर्त्तरि परस्मैपदात्कृते लुङ् विश्राणनं वितरणमित्यमरः ।

(२९) स्यन्दन्त इति । स्मयमानानां विकसतां कैरवाणां मधुभिः स्यूता प्रोताः तन्मधुकण वाहिन इत्यर्थः । इति मन्दानिलविशेषणं

गर्वान्धाः प्रति वल्लि कर्णपरुषं गुञ्जन्ति पुष्पन्धयाः
सर्व्वेभ्यो विभजामि मद्दपुरिदं बाले ! तवैवाग्रतः ॥

मल्लि । सावेगं अपवार्य्य ।

सारसिए ! अवि सच्चं अज्जउत्तस्स वअणिदं ।

सार । मुग्धे ! ण जाणासि एदस्स साहस सीलत्तणम् ! जेण पुढमं वि तुह अलाहे आसंकिअ कण्ठमूले करवालो पसारिओ । ता झत्ति अस्स अहिलासं पूरेहि वारेहिवा वअणेण ।

मल्लि । स्वगतं । वारेमि दाव । प्रकाशं । अज्जउत्त ! इत्यर्द्धोक्ते । सलज्जं । अपवार्य्य । सहि ! सहि ! तुमं णिवारेहि णाहं अप्पणो पहवामि लज्जाए ।

मारुतः । सानन्दं । स्वगतं । साधीयानयं कपट साहसोपन्यासः । यतः

अव्यक्त कोमलाधर मर्द्दित विरत मार्य्य पुत्रेति !
अस्या मुखेन्दु विम्बादमृतमिव स्यन्दितं वचनम्

प्रकाशं । सारसिके ! किमाह भीरुमध्यमा मदर्थितस्य ।

सार । अणुजलं एव्व भणदि णाहं अप्पणो पहवामित्ति

मारु । कस्तर्हि प्रभवति ।

---

मदनाख्य पावकस्य शिखाः ज्वाला भूताः प्रांशवः उन्नता इत्यर्थः । दीर्दो व्याप्टतत्वादुन्नतत्वोक्तिः एते चन्द्रांशवः सन्तीत्यन्वयः । अत्र मन्दानिल चन्द्रांशु भ्रमर गुञ्जितानां उद्दीपनत्वेन विरहिणां अनलवत् सन्तापकरत्व प्रसिद्ध्या एभ्यो मद्दपुः विभजामीति कपट साहसेन साध्वसोत्पादनम् ।

सार। णं महाभाओ एव्व।

माधव:। सहर्षं।

यदि प्रिये! वेत्सि तव प्रभुं मां
अनन्य साधारण दास मङ्गी:।
तदस्य वाचो मम पात्रमस्तु
स्वयं ग्रहा श्लेष महोत्सवानाम्॥

मल्लि। साक्षूयं अपवार्य्यं। सारसिए! कीस तुमं सम-
क्खे पवट्टावेसि। अपवत्तुं मिच्छति।

सार। हस्तेन धृत्वा विहस्य। सहि! कीस तुह पीरन्ध
रोमञ्च वञ्चला अग कुम्भा। मये समक्ख ज्ञाहो भीदा पुलम
कञ्चु एहिं संछादिमा एहिंसि।

माध। स्वगतं। साधु सारसिके साधु। सम्यगुपक्षिप्त-
वती।(२०) प्रकि। नव्वन्ति वासिव्यसि मन्दाकिव्या:। प्रकाशं।
सारसिके! अपि सत्यं मदुपगूहभीतौ धृत कञ्चुकौ स्तनौ।

सार। अहइं।

माध। यद्येव मुपालभे तावदेतौ।

तरुणिमकरि कुम्भौ हे प्रिये राज कुम्भौ
किमिति न परिरम्भं स्थायतो मे सहेथे।
समुचित मथवा वां यो युवां निर्दयोस्थ:
प्रकटित गरिमाणौ भज्यमानेऽपि मध्ये॥

मल्लि। साक्षूयं। सारसिए! कीस मिच्छा कहेसि।

माध। सारसिके! किं मिथ्यैव कथयसि।

---

(२०) उपक्षिप्तवती उत्प्रेक्षितवतीत्यर्थः।

कदम्ब नवकुड्मल प्रकर गुम्फिता मन्वियं
मनोभव समर्पिता स्फुरति वापि हारावलिः ॥

सार । विलोक्य । संकेतमाश्रित्य । स्वगतं ।

प्रियपाणि पल्लवतलाभिमुद्रितः
सुदृशः स्तनः समकठोरकर्कशः ।
अनुयाति मङ्गलकुले पयोभृत-
मदनाभिषेक मणिकुम्भडम्बरम् ॥ (२२)

सार । ता जाव अहं लअन्तरिदा होमि ।

मलि । स्वगतं । हन्त च मकुणोमि अज्जउत्तस्स हत्य
कमलादो त्थणं अवहरिदुं । कथञ्चिदपकर्षति ।

मार । सविषादं । हन्त ।

सकृदिव समर्प्य वाले मम हस्ते मदन घर्म तमस्य ।

---

मञ्जरीं कथं न भजसे कस्मात् मनुषे इत्यर्थः । तर्हि कष्टकितत्वेन
स्पर्शविषयं तत् किमित्यत आह कदम्ब नवकुड्मलेति । शेषं स्पष्टम् ।
तया च मन्मथार्पिते कदम्ब कुड्मले हारे ते पुलक मञ्जरीति भ्रम
इत्यर्थः । समकठोरयोरिति स्तनविशेषणेनास्याः सुखसौभाग्य सम्पत्तिः
सूचिता । तदुक्तं शास्त्रे यस्याः स्तनौ समौ स्निग्धौ शिरारोम विव-
र्जितौ । हस्तिनासोरु जङ्घा च सा कन्या लभते सुखमिति । स्तनौ
च कठिनौ यस्याः पीनोन्नत युगौ समौ । समांसलौ च स्निग्धौ च
सा सौभाग्यवती भवेत् इति च ।

(२२) प्रिय पाणीति । करम्बितः खचितः करम्बः शबरः सारः
संप्रक्त खचितः समा इति कोषः । मङ्गलः मङ्गलार्थः यो विशेषः
सर्वकल्पितः कलशो तेन कलुषम् यो मणिकुम्भः तस्य डम्बरं आडम्बर-
मित्यर्थः ।

अपहरथे कुचकुम्भं दर्षित करादमृत कुम्भमिव ॥

मल्लि । स्वगतं । हृत्थि अज्जउत्तस्स करकमलादो ओसरन्तीए मह पुणोवि दुव्विसहा जोण्हा ।

मार । स्वगतं । भूयोऽपि साहसमुपन्यसामि । प्रकाशं । अयि ! प्रिये यद्यंव मकरवाासि ।

उपरि पतति चण्डे चन्द्रिका श्वेत वह्नौ
मरुति किरति विष्वक् पुष्प धूली कुकूलम् ।
प्रविशतु मदनाग्निप्लुष्ट शेषं वपुर्मे
परिचल दलि धूमं पल्लवाङ्गार तल्पम् ॥ (२२)

यावत् पर्य्यन्त भाजो लतायाः पल्लवे तल्पं कल्पयामि । निष्क्रान्तः ।

मल्लिका । भयं नाटयति ।

मार । स्वगतं । साहु भाढत्तं महाभाएण । प्रकाशं । सहि ! निक्करुणे पेच्छ पेच्छ सअं एव्व किसलएहिं तप्पं कप्पिजण पविसइ महाभाओ ।

मल्लिका । ससम्भ्रमपुत्थाय । अज्जउत्त ! मा मा साहसं

---

(२२) उपरीति चन्द्रिकैव श्वेतवह्निः शुक्लवर्णोऽग्निः प्रसिद्धोऽग्निः रक्तः अयन्तु श्वेत इति वर्णानेव भेद इति भावः । तस्मिन् उपरि पतति सति मरुति वायौ पुष्पधूल्येव कुकूल तुषानलः तं विष्वक् किरति सति मदनाग्नि प्लुष्टात् शेषं मे वपुः कर्तृ, परिचलन्तः चलयो भ्रमरा एव धूमाः यस्मिन् तत् तथोक्तं पल्लवा एव अङ्गाराः तेषां तल्पं शयनं कर्म प्रविशतु । प्रपूर्वात् विशधातोः कर्त्तरि परस्मैपदात् प्रार्थनायां विध्यर्थे वा लोट् ।

अणुचिट्ठ। स्वगतम्। हन्त पविट्ठो एव्व ता अहं वि तं एव्व पञ्जव तण्यं पविसामि।

सार। विहस्य सगतं। तं एव्व पलोअदि।

मल्लिका। सत्वरं निष्क्रान्ता।

सार। विलोक्य। सचिन्तं। हन्त! सव्वं एव्व परि-रक्खो सुहाए वसहो ता अहं वि अस्सिं लआमूले चिट्ठामि। तथा कृत्वा सवितर्कम्। अज्ज ण आणिदो कलअण्ठादीणं वुत्तन्दो। कर्णं दत्त्वा। पदसद्दोविअ।

ततः प्रविशति भ्रमरक द्वितीयः कलकण्ठः।

अवगुण्ठितास्च रमयन्तिका मदमालिका कालिन्दी मधुकरिकाः

कलकण्ठः। भ्रमरक! कथमाश्रमे न दृष्टो मल्लिका सखो वयस्यः।

भ्रमरकः। णाह! भअवदी अस्समेसु दिट्ठव्वं।

कल। मधव्वेषु चन्द्रिकावतारसुभगेषु लतामूलेष्वन्वि-ष्यामः।

सर्व्वाः। चदिहि णाम उत्सु णाम्ह पिअसहीए मल्लि-आए दंसणाअ।

मदमा। सहीओ सह पंसुकीलणादो आरहिअ एत्तिअं समयं पिअसहीए असुक्कवासा अज्जव्व अहं अदं-सण दुक्खं जाणामि।

सार। विलोक्य सहर्षं। हन्त मह चिन्तअं तीअं एव्व आअदा एदे।

कल। विलोक्य सहर्षं। इयं सारसिका।



Digitized by Google

सर्व्वाः । सहर्षं । अम्ह हि सारसिआ ।

सार । निर्व्वर्ण्य सानन्दं ।

रमअन्तिआवि एसा । उपसृत्य । महाभाअ ! दिट्ठिआ वड्ढसि पिअदमा लाहेण । रमयन्तिकां प्रति । सहि दिट्ठिआ लद्धासि ।

रम । सहि । सारसिए ! कहिं णु मल्लिआ ।

इतराः । तुरअ तुरअं भण ।

सार । सखेदं सदयञ्च । एत्थ लआ पदेसे अज्जउत्त कहं वि मारुएण णं सङ्गमिअ इह आअदह्मि ।

नवमा । सहर्षं सविस्मयञ्च । कालिन्दि ! लज्जावइ क्खु सो पिअसही णाम गब्भेहिं वअणेहिं ।

कल । पुरतो दृष्ट्वा ससम्भ्रमं । अहो ! सर्वतः संक्षुभित इवायं प्रदेशः । पुनर्विलोक्य । सारसिके ! पश्य पश्य

निरुन्धद्दिग्वक्त्रं किरण महिमानं हिमरुचः
प्रतिघ्नच्चक्षूंषि प्रकटित भयाश्चर्य्य मभितः ।
तमो वा तेजो वा तदुभय परिम्लिरथवा
किमप्येतत्सत्वं तिरयति जगद्दीपयति च ॥(२४)

सर्व्वाः । सभय विस्मयं पश्यन्ति ।

नेपथ्ये । हा प्रिये ! मल्लिके !

---

(२४) निरुन्धदिति । अथवा तदुभय परिम्लिः तदुभययोः तमस्तेजसोः परिम्लिः सम्मिलनं सम्मिलितोभय स्फुरणं वेत्यर्थः । किमपि अनिर्वचनीयं एतत् दृश्यमानं वस्तु । जगत् कर्म्म तत्त्वं सत्वत्वेन तिरयति छादयति दीपयति प्रकाशयति चेत्यन्वयः ।

कल । साशङ्कं सविषादञ्च । हन्त वयस्यस्याय मार्त्त-आक्रन्दः ।

सर्व्वा अथानि ताडिता इव भवन्ति ।

कलकण्ठः । सत्वरमुपसर्पन्ति ।

ततः प्रविशति सवाष्पमदनो मारुतः ।

मारुत । हा ! प्रिये ! क्वापसृतासि

स्फुरति कथयेवात्मा चेतो निमग्नमिवानले
भवति च वपुः स्वेदू प्रासादिवाधिक विह्वलं
अयि हतविधे ! प्रापय्य प्राक् तथा पद मुच्चकै:
अकरुणा कथमन्धे कूपे निपातयसेऽद्य मां ॥

कल । उपसृत्य । सखे किमाशीर्मल्लिकायाः ।

सर्व्वाः । उपसृत्य । महाभाग्न ! किं णु पियसहीए

मारु । विलोक्य सवासामिमयं । स्वगतं । हन्त आगता एतेऽपि । प्रकाशं । हा सखे ! व्यर्थस्ते परिश्रमः । हा सख्यः ! मुषितं वो जीवितम् ।

कलकण्ठः । सखे ! कथमव्यक्त कथनेन खेदयसि । ननु पृच्छ्यते किमासीन्मल्लिकाया इति ।

सार । महाभाग्न ! या दाणिं एव्व तुमं पलुव तप्पे संपत्ता ।

मारु । तर्हि श्रूयतां अवणपरुषं

अव्याज रम्य मधर ग्रह लोलुपोऽहं
व्रीडानतं वदनमुन्नमयामि यावत् ।
तावत् कुरङ्गमिव कातरकातरे वे

नेत्रे निमीलितवती बत हा हतोऽस्मि । इति पतति ।

कल । रुदित्वा । सखे ! यदि मूर्च्छिता तर्हि शिशिरै-राश्वासयामः ।

सख्यौ । सवाष्पं । भत्तिं आसा सेव्व पिअसहीं ।

मार । रुदित्वा । महाभाअ ! कहिअं मए अक्खे पुढमं एव्व भअवदीए । मल्लिआ पुढम सङ्गमे मुच्छिआ भविस्स दित्ति । ता आसा सेव्व ।

मारु । अन्यदपि दारुणं श्रावयिष्यामि ।

कल । साभ्रङ्गं । किमिव ।

मारु । अथ तस्मिन् क्षणे ।

तां पितुर्गौ लुलित विह्वल गात्रमङ्के
हा हा किमेतदिति यावदहं बिभर्म्मि ।
तावद्धि मोहकरणं मम नैव जाने
भूतेन केनचिदपक्रियतेस्म बाला ॥ (२५) ॥

इति मोहं नाटयति ।

कल । सवाष्पं धारयन् । हन्त ! तत् प्रयुक्त एव प्राग्दृष्टः संक्षोभोऽपि ।

नव । हा पिअसहि मल्लिए ! देहि मे वअणं । इति छिन्नपातं । (२६) पतति ।

---

(२५) करणं इन्द्रियवर्गमित्यर्थः ।

(२६) छिन्नं पातं पतति । छिन्नवत् पततीत्यर्थः । उपमाने कर्मणि चेति णमुल् । कषादिष्विति पततेरनुप्रयोगः ।

इति श्रीमल्लिकामारुतव्याख्याने परिमलाख्याने अष्टमोऽङ्कः ।

कालिन्दी । हा हदअदेव्व ! मन्म एव्व वड्ढिदा लदा कहं णु फल समए लूणा । इति नवमालिकां धारयति ।

रम । हा मन्दभाइणीए मह आम मेणक्विअ एसो अणत्थो । हा सहि मल्लिए ! मम्बि ण एहि । इति पतति ।

मधुरिका । हा व्हिम्रो किअन्तेण मल्लिआ मुहेण सव्वोवि बन्धुवग्गो मारओम्र । इति धारयति ।

भ्रम । हा सामिणि ! कहिं णु अणाहं दासवग्गं उव-क्खिअ गआवि ।

मार । संज्ञां लभते ।

सार । नातिशोकं । स्वगतम् । मस्से अहं एसो जो अविज्जा पहाबो भअवदीएत्ति । प्रकाशं महाभाम ! णादि संभमो कादव्वो भअबदिं दट्ठूण सव्वं कप्पइ स्मामो ।

कल । युक्तमाह सारसिका । तद्गच्छामो भगवती-मन्वष्टुं ।

मार । सशाम्यं । यद्भवद्भ्यो रोचते ।

इति निष्क्रान्ताः सर्व्वे ।

इति अष्टमोऽङ्कः ।

---

## अथ नवमोऽङ्कः।

ततः प्रविशति सारसिका।

सार। सोच्छ्वासम्। दिट्ठिआ जोअ विज्जा पहावदो परोक्ख-बोह सत्ताए (१) भअवदीए। जम्मन्दरे कुविदस्स महेसिणो सा वो वट्ठिअ मुच्छा मुणिअ करणा मलिआ भत्ति कञ्चीउरं णीदा। तहिं च्चिअ णिरिकाम च्छोप्प सादा सादिअ सोमन्तमणि फल मत्त णिह्नुणिअ मोहा अड्ढेरणे समएण पुणो पच्चाणीदा अ। सानुतापं। मा कएणे उण ताणि ताणि मङ्गलेदराणि आसङ्कमाणो भए उण बहुसो णिवारिदो मणि जडतडेसु कलअण्ठ दुडुमो सोअ-पज्जा उलो पहि हिण्डइ। णामालिआमुहो सहो अणोवि देसु एव्व पदेसेसु। सोच्छ्वासं। इदो वरं ताणंवि मुहुत्त परिमिदं एव्व वसणं। जदो भअवदी एहिं कञ्ची-

---

अथ नवमोऽङ्कः।

(१) योगविद्याप्रभावतः योगविद्यायाः ज्योतिष्मत्याख्य मनः प्रवृत्त्या-लोकविन्यासरूपायाः प्रभावतः परोक्षबोधे अप्रत्यक्षस्य विज्ञाने शक्त्या सामर्थ्यं युक्तयेत्यर्थः। तदुक्तं योगपातञ्जले प्रवृत्त्यालोक न्यासात् सूक्ष्म व्यवहित विप्रकृष्ट ज्ञानं इति। केचित् तु योगविद्यायाः प्रतिभाख्यायाः प्रभावतः इत्यर्थः प्रतिभाद्वा सर्वमिति सूत्रादित्याहुः। अन्ये तु योग-विद्यायाः धर्मलक्षणावस्थाख्य परिणामत्रये एकविषयक ध्यान धारणा समाधि लक्षणक संयम रूपायाः प्रभावतः परोक्षो यो बोधः तस्मिन् अतीतानागतज्ञाने इत्यर्थः। शक्त्या सू॰ परिणाम त्रय संयमादतीताना-गतज्ञानमिति पेठुः।

उरादो आअच्छन्तो एव्व एत्थ पसमे मम्मुहादो मालअस्स पसाणं अ वसणं सुणिअ तेणव्व लोअविज्जा पहावेण मणि जउं एव्व मलिअं णीदवदी। अहं वि अवअ सोअ-विह्वलं अप्पावीसवसुकुडुम्ब आसासेमि। नमो त्रिलोक्य। हुं पवुट्टो एव्व तमालजाल णिणिद्ध जलहर परिणाह कवलिअं वराऽमो अ दंसणमेत्त विहडन्त विरहि जणा उसो वरिसो ता मुहुत्तपरिमिदं वि मालअस्स मडन्तं वसणं सङ्केमि। इति निष्क्रान्ता। प्रवेशकः।

ततः प्रविशति माधवः सकरुणम्।

कल। सकरुणं।

नैवोपायान् गणयति तथाऽगोचरे विक्रमाणां
त्रैलोक्येऽस्मिन्नहह नियमादेधमाने विधातुः।
क्रूरातङ्कक्रकचविदलद्धैर्य्यसारा वतामी
संसीदन्तो व्यसनदहने कूलपातं पतामः॥ (२)॥

माध। सकरुणं निश्वस्य। हा प्रिये! कामवस्थां प्रपन्नासि।

तन्वङ्गि! दर्शय तदङ्गज सार्व्वभौम
माङ्गल्यदाममधुरं वदनेन्दुबिम्बम्।
किं नेक्षसे महति सन्तमसे पतन्तं
अन्धं भविष्णु सकलेन्द्रियमात्मदासम्॥ (२)॥

---

(२) कूलपातं पतामः कूलवत् पताम इत्यर्थः। तटवत् अधःपतनाः स्म इति भावः।

(२) तन्वङ्गीति। अङ्गजसार्व्वभौमस्य मन्मथ चक्रवर्त्तिनः माङ्गल्यं मङ्गलप्रदं यत् दाम तेन मधुरं मनोहरं स्पष्टमन्यत्।

कलः। हन्त! भगवत्यपि न ज्ञायते क्व गतेति।

ईषत् सोच्छ्वासं। अथवा

परमवलम्बोऽस्माकं भगवत्यन्विष्टुमगमदित्याशा।
पततामगाधकूपे पारे रूढेव तृणवल्ली॥ (४)

मारुतः।

हा मज्जीवितमल्लिके! क्व नु गतं दासे मयि प्रेम तव
त्यक्त्वा मामशरण्यमार्त्तमदये क्व त्वं गतासि स्वयम्।
पृच्छ त्वं कलकण्ठमुद्भ्रमति मे चेतो धृतिर्ध्वंसते
चूडायामयमञ्जलिर्मधुरया वाचा सकृत् संलप॥

सवाष्पातिशयं। कथमङ्कस्थितेव गतासि।

स्मरामि तव तत् प्रिये! जघनभारमन्दं गतं
सखीव वचनकाकुभि (५) स्तदपि सस्मितं व्रीडितं।
चलाचलकनीनिकातरलनोत्तरङ्गं च तद्
विलासशतमन्थरं वलितकन्धरं वीक्षितं॥ (६)॥

---

(४) काञ्चित् युक्तिमाह। अथवेति। अथवा अगाधः अतलस्पर्शः यः कूपः तस्मिन् पततां जनानां पारे कूपतीरे रूढा तृणवल्ली वेत्युपमा अस्माकं परं केवलं अवलम्बः आश्रयभूता भगवती मन्दाकिनी मल्लिकामिति शेषः। मल्लिकामन्विष्टुमगमत् इति आशा अस्तीति भावः।

(५) सखीवचनानां काकुभिः पारिभाषिक स्वरविकारैः सस्मितं तत् प्राकट्ये व्रीडितमपि स्मरामीत्यन्वयः।

(६) चलाचलायाः कनीनिकायाः तरलनेन उत्तरङ्गं उद्गततरङ्गं अतएव विलासानां तात्कालिक स्वकीय विशेषाणामित्यर्थः। तात्कालिको विकारः स्याद्विलासो दयितेक्षणे इत्युक्तेः। शतेन (संख्यावाहुल्ये

मन्मूलमङ्गजरुजा (८) चिरमन्वभावि
मन्ये मनस्विनि ततस्त्वममर्षितासि॥

सोपालम्भम्। यद्येवं किं न जानासि त्वद्दर्शनतः प्रभृति अनितर साधारणीमवस्थाम्।

मत्वालापं तव पिककवधूकूजिते षून्मना ये (९)
नेत्रच्छाया प्रणयिषु रमे (१०)दीर्घिकेन्दीवरेषु-
प्रत्युद्गच्छाम्युपवनतले सङ्गतां त्वां विशङ्कः
प्रत्यग्रोद्यत् कुसुमकलिकां बालमन्दारवल्लीम्॥

अपिच।

तद्दोषासु निमेष कर्म मनुते दृष्टिर्दृढामर्गलां
तन्नामाक्षरमेव वक्ति रसना वाक्यान्तरे प्रसुता।
त्वत्संकल्प समागमेष्वपि घनोत्तुङ्ग स्तनालिङ्गने
वक्षो मे व्यवधानदान परुषान् हारानपि ध्यायति॥(११)

---

(८) अव्याजेनेति उक्त विशेषण विशिष्टैः अङ्गैः यत् यस्मात् कारणात् अङ्गजरुजा मन्मथ व्याधिः चिरं मन्मूलं मन्निमित्तं अन्वभावि अनुभूता। हे मनस्विनि ! प्रशस्त मानसे ततः चिरतर मन्निमित्तक मन्मथ व्याध्यनुभवाद्धेतो स्त्वं अमर्षितासि कुपितासि इति मन्ये। अन्यथा प्रशस्त मनस्कत्वान्नैवं कुप्येरिति भावः।

(९) उन्मना ये। उत्सुकः उत्सुको भवामीत्यर्थः। उत्क उन्मना इत्यमरः। अभूततद्भावविषयात् उन्मनः शब्दात् भवत्यर्थे भृशादित्वात् क्यङ् सलोपश्च। सू। भृशादिभ्योभुव्यच्वेर्लोपश्च हल इति। ततोङित्वात् कर्त्र्यात्मनेपदे लटि उत्तमैकवचनम्।

(१०) रमे क्रीडामीत्यर्थः।

(११) त्वद्दोषास्विति। दृष्टिः कर्त्री त्वद्दोषासु विषये निमेष-कर्म पक्ष्मपतनव्यापारं कर्म दृढामर्गलां दृढार्गलमिव प्रतिबन्धकत्वेन-

आकाशे । भगवति मन्दाकिनि ! त्वमपि कथं न लक्षयसि । अथवा एवमतमेव ।

परमवसितां प्रायेणापि प्रियां बत मल्लिकां
स्वयमनुयती(१२)शोकावेशाद्वपुष्यपि निस्पृहा ।
नयनसलिलैः स्यात्कुर्व्वाणे ध्रुवं निजधारया
वलसमुदिते सखीभूतासि योगहुताशने ॥

कलकण्ठः । कष्टं भोः ।

किमाः पातालकुक्षौ किमु किमु निरये मज्जिताः किं प्रविष्टा
वल्मीकरन्ध्रे निमग्नाः किमु निविडतमे बाडवे धूमचक्रे ।
विद्धो नो दुर्विभाव्ये तमसि निपतिताः क्वापि कर्त्तव्यमूढाः
नद्याऽऽवर्त्तासु घूर्णज्जवतृणकणिका निर्विशेषा भ्रमामः ॥

---

स्वर्गं । अहुते वाक्यान्तरे प्रस्तुता रचना स्वमात्राचरमेव वक्ति । त्वदङ्कसुख-समागमेऽपि त्वया सह मनोरथो परिचितसम्भोगेष्वपीत्यर्थः । मनोऽनुकूलनाभिकुले विचरे मे वक्षः कर्त्तुं कारागारे व्यवधानदानेन हेतुना परस्मात् क्रूरात् त्वदीयस्तनयोर्मर्दीय मध्यम अध्यवसितं तेन आलिकुलविरोधित्वादिति भावः ध्यायति चिन्तयति । यद्वान्तरेऽपि रतिसमये रमण्योर्नां मुक्ताहानिस्तु भूषणं भवति इति ।

( १२ ) परमिति । प्रायेण परं केवलं अवसितामपि प्रियां प्रेमास्पदां मल्लिकां वतेति खेदे स्वयं अनुयती अनुसरन्ती सती शोकावेशात् दुःखातिभूमि संरम्भात् वपुष्यपि निस्पृहा इच्छारहिता नयनसलिलैः स्यात् कुर्व्वाणे स्यात्कारकरे (स्यात्कारो वह्निनिर्वापणशब्दः ) निजा या धारया नाभिचक्रादिषु देशेषु चित्तस्य इत्तिमात्रेण वशरूपा । उक्तञ्च देयकर्मविषयस्य धारणेति तस्याः वशेन सामर्थ्येन समानजयरूपेण समुदिते आविर्भूते । उक्तञ्च समानजयात् ज्वलनम् इति । योगहुताशने योगाग्नौ ध्रुवं सत्यतया सखीभूतासीत्यन्वयः ।

मारुतं प्रति। वयस्य! समनुज्ञापयात्मानम्। ननु श्रूयते श्रेय्यें च विपद् स्त्रीष्वन्त इति।

मारु। निःश्वस्य।

यामय्याऽऽविशति प्रवास शयनं द्राक् दारुभीत्याकुला
मा मा साहसमार्य्यपुत्र! रचयेत्या मुग्धभाषिणी।
आलम्बिष्ट करेण कङ्कणजुषा चेलाञ्चले तादृशीं
प्रयांव्याङ्गगतां रमामिव कथं धैर्य्यं धरेयं सखे! ॥

अपिच। तस्मिन् मन्दारमूले

परपरिणये (१३)जाते प्राणप्रियाशु रयाङ्कितं
प्रियसहचरी बुध्या प्रेमाकुलं परिरभ्य माम्।
विलपितवती यद् यद्वाला सगद्गदिकाक्षरं
परिसरजुषा तत्तत् सर्वं त्वयापि सखे! श्रुतम् ॥

आवेगं नाटयन्। हा!

किमपि करणग्रामा(?)ध्यन्तमः पिदधाति मे
भ्रमति हृदयं मोहाविष्टं विषीदति जीवितम्।
हहह! सहसा सर्व्वाङ्गीणः (१४) प्रसर्पति कश्चन
प्रलय शिखिना तुल्य स्तापः सखे! करवाणि किम् ॥

---

(१३) परपरिणये इति। परेण परिणये विवाहे जाते सति प्राण प्रियाशुः हातुमिच्छुः। षष्ठेऽङ्के अंह जीविदसिव्विसेसे बोमालिए इत्यादिना सहि बोमालिए जायेहि एदं पच्छिमं परिरम्भं इत्युक्तप्रकारो विलाप इति बोध्यम्।

(१४) सर्व्वाङ्गीणः सर्व्वाण्यङ्गानि व्याप्नुवन् इत्यर्थः। तद् सर्व्वादेः पथ्यङ्गेत्यादिना खः।

जलदनिनदत्रस्यन्मुग्धाङ्गनास्वयमर्पित
स्तनतट परीरम्भ क्रीड़ा प्रहर्षुल कामुके ।
कुपित मदने काले केकाकुल प्रचलाकिनि
क्षणमपि कथं प्राणित्वेष प्रिया विरही जनः ॥ (१९) ॥

अपिच ।

एते प्रेङ्खोलयन्तो वियति घनघटी प्रान्तलोला बलाका
धाराम्भश्चूर्णयन्तः सकरक मभितश्चातकी पीत शेषं ।
सञ्चेरन् पूर्ववाताः कथमिव पथिक प्रेयसी हस्त पाली
विन्यस्ता पाण्डुगण्डाम्बुजमलिनघनश्वास सहस्रावलम्बाः (२०) ॥

नभो विलोक्य । सकरुणं । हा प्रिये मल्लिके !

तद्धर्षयस्व तव काञ्चन कर्णिकार
कर्णोत्पलप्रभममन्दितगात्रि ! गात्रं ।
एषा पुनस्तव द्युतो गगने स्फुरन्ती
सौदामिनी भवतु सम्प्रति सव्यलज्जा ॥ (२१) ॥

पुरतो विलोक्य ।

लम्बन्ते भ्रमराः कदम्बमुकुले । सोच्छ्वासं । हा मेचकाः कुन्तलाः ।

अन्यतो विलोक्य ।

संमाद्यन्ति चकोरकाः प्रतिवनं । सकम्पं । हा मन्थरे लोचने

---

( १९ ) केकाकुलाः प्रचलाकिनो मयूराः यस्मिन् इति काल-विशेषणम् ।

(२०) प्रेङ्खोलयन्तः तरलयन्तः प्रेङ्खोलितं तरलितमिति हलः ।

( २१ ) तद्धिति । काञ्चनकर्णिकाराणां कनकपरिव्याधकुसुमानां कर्णजपाः पिशुनाः प्रभाः यस्य तत् तथोक्तम् ।

अन्यतो दृष्ट्वा ।

विष्वक् फुल्लति मालती सुरभिला । सशोकं । हा मुग्धमन्दस्मित !

इतरतो विलोक्य ।

व्याप्तं प्राहलमिन्द्रकोप निवहैः। साक्रन्दं । हा ताम्रविम्बाधर !

(२१)इति मूर्च्छति ।

कल । सकरुणं । किमेतत् । धिक् कृतान्त ! कथमेकान्त निष्ठुरोऽसि । सवाष्पं । हा धिक् ! कष्टं

किं वज्रसार शतधा न विशीर्णमासीत्
अद्यापि ते हृदय मा: कठिनोत्थवाहम् ।
पश्यन्नपि प्रियसखस्य तथैव वर्त्तौ
यच्छोक मोह मुकुलन्नयनं मुखेन्दुम् ॥(२२)॥

हन्त । जलधरारम्भं वर्णयन् । हतकोऽहमेव कारण-मस्मि । नभो विलोक्य ।

जलधर जलधर मन्मथ मन्मथ पवमान पवमान ।
सर्व्वान् वः प्रणतोऽहं प्रियसुहृदो जीवितं भिक्षा ।

---

(२१) अन्यत इति । अत्र प्राहडलक्षणत्वेन सन्निहितानां भ्रमरचकोरादीनां उपमानवस्तुत्वेन तद्दर्शनात् क्रमेण तत्तदुपमेय भूतनायिका कुन्तलचोचनादीनां स्मरणाविर्भाव इति बोध्यम् ।

(२२) किमिति । हे वज्रसार ! इति कृतान्तसम्बुद्धिः । ते हृदयं कर्त्तृ । अद्यापि शतधा विशीर्णम् किं कुतः नासीत् । मा: इति सन्तापे । तत्र आत्मनि दोषमवगम्य परनिन्दकत्वं चिन्ताजन्यम् । कठिनः वज्रसारः अहमेव । एवकारात्तत्व भिन्नार्थः । तत्र हेतुमाह । पश्य-न्नपीति । उत्तरार्द्धः स्फुटार्थ एव । अत्र पूर्वार्द्धे कठिनोऽयवाहमिति क्वचित् पाठः ।

मारु। प्रबुध्यते।

कलकण्ठः। सोच्छ्वासं।

एष मत्प्रार्थितोऽभ्येत्य मारुतो मारुतं शनैः।
ऐकमत्यादिव सिञ्चन् शीकरैः सम मोमुदीत् ॥(२४)॥

मारु। सोन्मादं।

कोऽयं देशः सुभगविपिनः सैषभूभृन्नितम्बः।
कोऽहं बाष्पप्रचुरवदनो नन्वहं मारुतोऽस्मि।
किं बाष्पं मे मनसि करुण स्तायते कोविभावः
कस्मादेषोऽप्यहह मुषिता प्रेयसी मल्लिका मे ॥(२५)॥

---

(२४) एकः शब्दः ययोस्तौ तयोर्भावः ऐकमत्यं तस्माद्धेतोः मारुतामारुताभ्यामित्यर्थः। सिञ्चन् प्रीणन्निवेत्युत्प्रेक्षा।

(२५) कोऽयमिति। पूर्वार्द्धः स्फुटार्थ एव। मे मम बाष्पं किं कुतः इति प्रश्नः। मनसि करुणः करुणरसः तायते विस्तृतो भवतीत्युत्तरम्। करुणस्यानुभावत्वेन बाष्पोद्गम इति भावः। अस्येति शेषः। अस्य करुणस्य विभावः उद्दीपनविभावः कः। अस्य करुणप्रसरे उद्दीपनं कारणं किमित्यर्थः। एषः करुणोऽपि कस्मात् विभावाज्जात इत्यर्थः। करुणस्य आलम्बनविभावोऽपि क इत्यर्थः। तथाच करुणविस्तरकारणं उद्दीपनं किम्। तथा करुणोत्पत्तौ समवायिकारणं आलम्बनमपि किं इति प्रश्नद्वयम्। अहह इति खेदे प्रश्नतः सारितत्वसूचकमिदम्। मे मम प्रेयसी मल्लिका मुषिता अपहृता इति प्रश्नद्वयस्याप्युत्तरम्। अनेन प्रेयसी शोषः उद्दीपनम्। प्रेयसी आलम्बनमित्युक्तम्। भवति। पूर्वार्द्धे। सैष भूभृन्नितम्ब इत्यत्र सः एषः इति पदच्छेदः। सश्चिस्तु सो विलोपे चेत् पादपूरणं इति अनेन तच्छब्दप्रथमैकवचनान्तस्य सस्य लोपः। इविरेचि इति वृद्धिः।

कल । सावेगं । कथमुन्माद इव ।

माध । यावदिह वनेऽन्वेषयामि । सत्वरमुत्थाय प्रचलति ।

कल । सत्यं प्रसृत एव माधवः उन्माद कालसर्पेण ।
कठिन कलकण्ठ ! किमद्यापि जीवसि ।

माध । परितो दृष्ट्वा । हन्त सर्व्वतो रमणीयेषु कृत-
सन्धानं प्रथममन्वेषयामि । हस्तेन दर्शयन् । एषु रक्तकदम्ब-
गुच्छलाञ्छनेषु न सम्भाव्यत एव ।

अत्र क्वचिद् गिरिनदीतट सैकतेन
बाला मरालललितं यदि सञ्चरेत ।
श्रोणीभरालसचलोलपदक्रमोत्थं
श्रूयेत मञ्जुविरुतं मणिनूपुरस्य ॥

कलकण्ठः । अहो अहो परां कोटिमारूढ़ उन्मादस्य ।
यतस्तथाविधं तस्याः नाम विस्मृत्य अन्वेष्टुं प्रवर्त्तते ।
भवतु अहमपि एतदेवानुवर्त्ते ।

माध । कर्णं दत्त्वा । सहर्षम् । सखे ! अप्रमत्तः सव्यतः
कर्णं प्रयच्छ ।

इह नवकरिदानोद्गन्धि वीचीकुलस्य
द्रुमगहन निगूढ़े कूलभागे ह्रदस्य ।
नखनिहतविपञ्ची पञ्चमस्थान मुग्धां
गिरमविशदवर्णां स्निग्ध कण्ठ्याः शृणोमि ॥

सोपालम्भम् ।

अस्मानुपेक्ष्य घनदारुणशोकदीनान्
मुग्धा सखीरपि सवाष्पकृतप्रलापाः ।

पद्भ्यां कुशेशयदलादपि कोमलाभ्याम्
मुग्धा कथं चरति शैलतटे मृगीव ॥

कल । स्वगतम् । हन्त कोकिलास्वरेण भ्रमति वयस्यः ।
प्रकाशम् । नहि नहि मल्लिका संलपति । एषा तु ।

पचेलिम जम्बूफलखण्डप्रहृष्टायाः कूजा
कोकिलवध्वाः न सखे ! सख्याः स्वरः सहि स्निग्धः ।

माक । सविषादम् । किं पिकवधूकूजितमेतत् । पुनः
कर्णं दत्त्वा । हन्त स्फुटेऽपि वैसादृश्ये भ्राम्यतो ।

मम कर्णौ दृषदामपि दर्शित द्रवत्वात्
प्रतिवर्णं चरितामृता स्रवः सु ।
स्वरसं पदनिन्दिता सुकण्ठ्याः
कथमेवं परुषा मम प्रियायाः ॥

सनिःश्वासम् । कस्य मुखात् प्रियतमाप्रवृत्तिमुपलप्स्ये । दृष्ट्वा
सकौतुकम् । एषः

परिवृत्तिलोभनीयप्रचलद्बालतरङ्गमालभारी । (२६) ॥
असकृद्वनदेवतावगाहैः परिपूतः पुरतो ह्रद स्सकास्ति ॥

यावदेनं पृच्छामि । उपसृत्य ।

(२७) ह्रद ! हृदयहरे ते निम्नताभोगदास्मिन्
पयसि सहचरी मे स्नातुकामाऽवतीर्णा ।

---

(२६) परिवृत्तीति । परिवृत्त्या भ्रमणेन लोभनीयाः तथा प्रचलन्त्यश्च याः बालतरङ्गमाला ऊर्म्मि लेशपंक्तयः ताः विभर्त्तीति तथोक्तः । मालाशब्दस्य हृस्वकादित्वात् तदन्तस्य चेति ह्रस्वः ।

(२७) ह्रदेति । हे ह्रद ! हृदय हरे मनोहरे ते तव

अपि चटुलतरङ्गाग्रान्दोलातुरीभिः
प्रतिलहरि वितीर्णाः काश्चिदन्याश्च शय्याः ॥

कथं अदत्तोत्तरसूर्वी तिष्ठति। [illegible]मेव अगाधे पयसि मग्नेत्यप्रियावेदनाविरोधि। [illegible]विलोक्य। सावेगम्। वयस्य! महान् प्रमादः। सत्यं मग्नैव पयसि प्रेयसी। बोधयति चास्मान्।

इयं सा विच्छिन्ना विरमति धवला चारलतिका
पुरा मालां लब्ध्वा कुवलयदृशो यामह महान्।
यया प्राप्तं तन्व्याः किमपि तदनङ्गानलरुजा
विपाण्डु प्रोत्तुङ्गस्तनकलशदोलायितसुखम् ॥

पुनर्विलोक्य। ससम्भ्रमम्। वयस्य! न सा मग्ना इदानीं तु मज्जति।

एतत्तदिन्दुपरिपन्थि महेन्द्रनील
सौन्दर्य्यचौर्य्यचतुरैरलकैः सनाथम्।
आकण्ठमग्नवपुषो हरिणेक्षणायाः
हा हन्त पश्य मुखमम्भसि कम्पमानम् ॥

---

अस्मिन् पयसि निमज्जनाभीरुता मे सहचरी स्नातुकामा अवतीर्णा इति प्रश्नार्थकः। काकुः। चटुलतरङ्गाग्रा चञ्चलोमातुरीभिः प्रतिलहरि अन्याः अन्यादृशः काश्चित् शय्याश्च रीति विशेषाश्चेत्यर्थः। तरङ्गिताख्या इति भावः। तरङ्गितत्वमपन्तु कल्लोल इव यः कान्तिविच्छेदस्तत्-तरङ्गितं इति। अपि वितीर्णाः दत्ताश्च इति प्रश्नः अथवा। स्नातु-कामा अवतीर्णा अवततार इत्यर्थः। तत्र युक्तिमाह। अपि किञ्चे-त्यर्थः। प्रति लहरि अन्याः काश्चित् शय्याश्च दत्ताः। यद्वा शय्या अपि दत्ताश्च इति योजना। प्रथमाभ्यये सन्देहपूर्व्वकः प्रश्नः उत्तरस्तु निर्धारपूर्व्वकः प्रश्न इति भेदः।

भ्यर्थितम्। हन्त तदेतद् गज निमीलितं नाम। सनिर्वेदं।
अहो दुर्ललित: खलजन:।

प्रणयवचनमर्थिभि: प्रयुक्तं
यदयमहो न शृणोति दुर्मदान्ध:।
अथ कथमपि चेत् करोति कर्णे
नयननिमीलितमुत्तरं विधत्ते॥

तदन्य मभ्यर्थये। पटान्तरे स्थित्वा। एष प्रकट दृष्टापराध: प्रणय कोपदुरुपसर्पां प्रेयसी मनुवर्त्तते मतङ्गज तरुण:। सविस्मितं। इदं खलु।

मानस्ते प्रणयार्पितानपि मुहुर्नो सल्लकी पल्लवान्
कुम्भस्पर्श परं निरस्यति करं धूत् कुर्वती शुण्डया।
प्रत्याख्याति पराङ्मुखी नयनयो र्हस्ताग्र कण्डूयनं
पत्युर्नानुनयं प्रतीच्छति यथा मानस्य याता वशम्॥(२८)

अतो नोचितमत्र प्रार्थन कदर्थनं। अन्यतो दृष्ट्वा। एतत् पारिप्लव नयन प्रभेन्दीवरित हरिन्मुखं हरिणी वृन्दं इत: प्रतिष्ठते। तदस्मिन्नन्यतमां हरिणीं प्रवक्ष्यामि। स्त्रिय: खलु स्त्रीवृत्तान्त परिज्ञाने सविशेष माग्रहिण्य:।

विलोक्य। कथं प्रचलत्यपि यूथे मत्प्रार्थित श्रवणाय एका विलम्बते।

---

(२८) मान: कोपविशेष:। तदुक्तं स्त्रीणामीर्ष्याकृत: कोप: मानोऽन्या सङ्गिनि प्रिये इति हेमचन्द्रेण तु ईर्ष्या मान: स्त्रीणामेव इति। तस्य वशं याता यथा करिणी पत्यु: करिण: अनुनयं न प्रतीच्छतीत्यन्वय:। तथाच स्वयं कृगजातिरपि चातुर्येण मानिनीव मानचेष्टा: करोतीति भाव:।

एषा पुरः प्रणयिना परिभुग्न कण्ठं
प्रेम प्रसारितदृशा परिपाल्यमाना ।
आस्ते स्तनन्धय विवल्गितदत्तदृष्टि-
राक्रान्तशर्करिलशैलतटा कुरङ्गी ॥ (२०) ॥

निर्वर्ण्य । अति हि नाम लोभनीयमेतासां कातरस्निग्ध प्रेक्षितं । मन्ये अत्र क्वचिद्गिरि कन्दर गता मन्दिरेषु सन्निहिता पाठयति पक्ष्मलाक्षी । सनिश्चयं ।

एणीनां चकित विलोकितोपदेशे
वामाक्षी प्रभवति सैव मल्लिका मे ।
शिष्यस्थं गुणमवलोक्य लोक कान्तं
विद्वद्भिर्गुरुरपि तद्गुणो हि कल्प्यः ॥

पृच्छामि तावत् ।

सारङ्गि ! मंस गमनोन्मुखि ! जीवनाथा
सा मे विभूषयति सम्प्रति कं प्रदेशम् ।
यो पादिशत्स्म तव कातरकातरेक्षा
माचार्यकीं नयन चंक्रमचातुरीणाम् ॥

कथमदत्तोत्तरा सह तर्णकैः (२१) प्रस्थितैव । किमनादर-कारणमस्याः किं प्रियया सह सङ्घर्षः । सवितर्कं ।

---

(२०) स्तनन्धयस्य शिशोः विवल्गिते गमनाऽपाटवप्रयुक्ते किञ्चिदुपप्लवनरूपे गमनविशेषे दत्ता दृष्टिः यया सा तथोक्ता इति कुरङ्गी विशेषणम् ।

(२१) तर्णकैः सह वत्सतरैः बालकमित्यर्थः । सद्योजातस्तु तर्णक इत्यमरः ।

लब्धा कियन्तमपि नेव गुणं प्रियायाः
स्पर्द्धां तयैव हरिणाः कथमाद्रियेरन् ।

विमृश्य । सनिश्चयं ।

स्पष्टं तदेतदथवा भजते यदस्याः
वक्त्रद्विषं हिमकरं कुलमौलिरेषां ॥ (२२) ॥

उपालभे तावत् । भोः भोः !

हरिणवंश्याः ! मा गर्वन्तु (२३) भवन्तो मल्लिकायाः लोचन सौभाग्य सर्वस्व हारिणो वयमिति ।

कातर्थ्यं पक्ष्मलता वैपुल्यं स्निग्धतेति सम्प्राप्ताः ।
आमाः केऽपि विशेषा दुष्प्रापा विभ्रमास्तु नाभ्यस्ताः ॥

करुण । सकरुणम् । हन्त परां काष्ठा (२४) मधितिष्ठति वयस्यः उन्मादस्य । यत् तिरश्चोऽपि प्रार्थयते अचेतनानप्या-

---

(२२) अथवा तदेतत् स्पर्द्धाधारणमित्यर्थः । स्पष्टं व्यक्ताऽनासदम् । यत् यस्मात् एषां हरिणानां कुलमौलिः कुलप्रधानो हरिणः कर्त्ता अस्याः प्रियायाः वक्त्रद्विषं हिमकरं चन्द्रं भजते । स्वकुलगुरुपरिग्रहद्वेषि वक्त्रत्वात्(?)वेन प्रियया सह हरिणानां स्पर्द्धाविधानं निःशङ्कमेव इति भावः ।

( २३ ) मा गर्व्वन्तु मा दृप्यन्तु इत्यर्थः । कर्व्व खर्व्व गर्व्व दर्पे इति धातोः कर्त्तरि परस्मैपदाल्लोट् । भवन्त इति कर्म्मोपादानात् प्रथमपुरुष बहुवचनम् । कृतम् । शेषे प्रथमः इत्यनेन मध्यमोत्तमयो-रविषये प्रथमपुरुषत्वविधानात् ।

( २४ ) परां काष्ठामिति । परां दूरां श्रेष्ठान्यदूरव्येष्वास्तु परः स्याद्दूरानात्मविकृष्ट इति नानार्थरत्नमाला । उन्मादस्य चित्तविभ्रमस्य काष्ठां दिशम् । अतिदीर्घमुन्मादप्रकारमित्यर्थः । अथवा परां काष्ठां अत्युत्कृष्टप्रकर्षमित्यर्थः । काष्ठा द्वयोः कालभेदे प्रकर्षे दिशि सान्नि चेति नानार्थरत्नमाला ।

भाषते । हा कष्टमेतावती मम मारुतप्रत्याशा । धिङ् नाम मम जीवितं यदेवं गते प्रियसुहृदि स्वयमेव न भिद्यते ।

सोपालम्भम् ।

यस्य त्वमेव परमाप्तमभूरसुभ्यः
स्वेभ्योऽपि यस्य तव सम्मत आत्मनोऽपि ।
उन्मादलङ्घितमताविति नाम तस्मिन्
हा मूढजीवित ! कियच्चिरमासितव्यम् ॥

चातकं विलोक्य । हन्त दयनीयमेतत् ।

मत्वा मृगान् प्रणयतो विमुखान् समन्यु
निःश्वस्य दीर्घमपसन्नशरीर (२५) मास्ते ।
निर्वेदशोकपरितापपरिप्लुतेन (२६)
चक्षुषा बाष्पकलुषीनविलोचनेन ॥

आकाशे (२७) साक्रन्दम् ।

कथमसि मल्लिके ! करुणया विधुरा किमपि
प्रियसखि । पश्य पश्य घनवाष्पमिदं वदनं ।
कमल इवालिपङ्क्तिरपतद्धत यत्र पुरा

---

(२५) समन्युः । सशोकः । अपसन्नं स्रस्तीभूतं शरीरं यस्मिन् कर्मणि तद्यथा भवति तथा ।

(२६) निर्वेदः स्वात्मावमाननम् । शोकः दुःखातिभूमिः । परितापः पश्चात्तापश्च एभिः परिप्लुतेन युक्तेनेत्यर्थः ।

(२७) आकाशे इति । पात्रं विना वक्तव्यापत्वात् आकाशे इत्युक्तिः । तल्लक्षणन्तु । किं ब्रवीष्येवमित्यादि विना पात्रं ब्रवीति यत् श्रुत्वेवानुक्तमप्येक स्तत् स्यात् आकाशभाषितं इति ।

विकसितमन्दमुग्धमधुरा त्वदपाङ्गततिः ॥ (३८)

मारु० । हा किं करोमि न दृश्यते प्रियतमा । कथैर्य्यं । भवतु पुनरित्यन्विच्छामि । श्रूयते हि अनिर्वेदः परमो हेतुः श्रेयसे इति । पदान्तरं गत्वा सकौतुकम् ।

इदं जम्बूकुञ्जस्खलितजलझात्कारलहरी
गभीरायाः सिन्धोर्मुदितमथ विहगध्वानिनि तटे ।
क्रमोद्गाढानङ्गज्वरविधुरकर्णाटयुवती
कपोलापाण्डु (३९) द्रागुदलति रुचिरं केतकदलम् ॥

साकूतम् ।

इदमभिनवोद्भेदस्वच्छामलद्युति केतकी-
दलमधिशिखाद्रोणीक्रोडभ्रमन्मधुव्रतम् ।
स्मरयति पुरा पश्यन्त्या मां त्रिनीलकनीनिका
लुलितलुलितप्रान्तां वामभ्रुवो विशदां दृशम् ॥

तदेनं विशिष्टगन्धप्रियं (४०) भृङ्गराजं पृच्छामि । अभिमुखं स्थित्वा ।

---

(३८) विकसित मन्द मुग्ध मधुरा । विकसिता विषयविशेषग्राहिणी विकासितं यद्विषये विशेषमवगाहते इति व्युत्पत्तेः । मन्दा मन्थरा मुग्धा सव्याजगर्भस्वभावा मधुरा सन्तापहरा चेत्यर्थः । कटाक्षैर्वीक्षणैस्तु सम्भोगौत्सुक्यभावना सीतली क्रियते तापो येन तन्मधुरं स्मृतं इति व्युत्पत्तेः । अपाङ्गततिः कटाक्षपङ्क्तिरित्यर्थः ।

(३९) क्रमेणोद्गाढ दृढीभूतः अनङ्गज्वरः यस्याः सा च सा विधुरकर्णाटयुवती च तस्याः कपोलवत् आपाण्डु धवलमित्यर्थः ।

(४०) विशिष्टगन्धप्रियं उत्कटगन्धाभिलाषमित्यर्थः । अत एव सर्वोत्कृष्टगन्धिमल्लिकावदनमधुपसाक्षादितमेव स्मारितभावगर्भमिदं विशेषणम् ।

मधुकर ! मदिराक्षी मे दृष्टा विपिने त्वया भ्रमता

अपि परिजातसौरभमवनिजुषाप्राप्तमाननस्पर्शात्। (४१) कर्णं दत्त्वा। कथमनाद्रियमाणः सगर्वं गायति। भवतु तथा प्रिया पाङ्गस्मारणमेनं मन्ये याभि। पदान्तरे स्थित्वा। कथमत्र रक्तकदम्बे प्रफुल्लेष्वपि पुष्पस्तबकेषु पक्षमधिश्रितेऽन्यो भृङ्गयुवा। निर्वर्ण्य सानुकम्पम्।

न पिबति सविधेऽपि स्यन्दमानं मधूलिं

न मिलति सह यूथ्यैर्नो कलं झङ्करोति।

न च मरुदुपनीते मोदिते पुष्पगन्धैः

तदयमपि तपस्वी कान्तया विप्रयुक्तः॥ (४२)॥

नैतं प्रक्ष्यामि। निर्वर्ण्य। सहर्षम्।

इयमनतिदूरवर्त्तिनः कदलीकुसुमाद्रागतेव विरह-पीडिताङ्गी भृङ्गी।

---

(४१) मधुकरेति। हे मधुकर ! विपिने भ्रमता त्वया मे मदिराक्षी दृष्टा इति स्वरविकारः। अवलोकितावेति प्रश्नः। कदाचिद् यां काञ्चिदवलोक्य तस्यां एतद्भ्रमेण दृष्टेति न प्रतिवक्तव्यमित्याशयेन तदीयमनितरसाधारणं लक्षणमपि पृच्छति। अपीति। अवनिजुषा भूलोकस्थेन त्वया आननस्पर्शात् तन्मुखसंसर्गाद्धेतोः पारिजातसौरभं स्वर्लोकीयनन्दनवनस्थ कल्पद्रुमसाध्यभौमकुसुमसौगन्ध्यं कच्चित् अपि प्राप्तं आसादितं वा इति प्रश्नः।

(४२) तत् तस्मात् उक्तप्रकारेण विषयेषु अरतिमत्त्वादिति भावः। तपस्वी शोच्यः अयञ्च भ्रमरोऽपि कान्तया विप्रयुक्तः विरहितः। विषयविरतिस्तपसामाद्य इत्यादिना विषयेष्वरतेः अवस्थाविशेषत्वेन विरहिलिङ्गत्वकथनत्वादिति भावः।

खिद्यति कुप्यति पश्यति चुम्बति गायत्यनङ्गुग्रप्रेमा ।
प्रत्यागतां विरही प्राप्य प्रणयाकुलां दयिताम् ॥

दृष्ट्वा चैतत् पूर्वेद्युरनिशावृत्तान्तः स्मर्यते । तथाहि तस्मिन् समये ।

पाल्लवं तल्पिम (४३) मास्थिते मयि प्रापदिन्दुवदना मदन्तिकम् ।

पुनः स्मरणमभिनीय । साक्रन्दम् ।

हा हतोऽस्मि ननु तच्चेदृशौ नीलनीरजदृशो न्यमीमिलत् ॥

कल । हा विनियन्तं

समयं उन्मादतिरोहितः संस्कारः सदृशदर्शनादुद्बुद्धः ।

माद । धिङ् मां प्रमादिनं यदुन्मत्त इव विस्मृत्य तादृशं कृतान्तनैष्ठुर्यं (४४) काननभ्रमणेन कालं क्षिपामि । आकाशे । हा प्रिये मल्लिके ! कथं मया विना त्वं मारूढासि ।

विपुलजघने मन्दं याहि क्षणं त्रिदशालये
त्रिदशचरितः कूले यावन् मयापरनुधाव्यते ।
मदनलिनयोः केलीधाम प्रकार मधीयतां
विमललहरी लोला वेधी रथा द्विजजातयः ॥ (४५)

---

(४३) पाल्लवं तल्पिमं किसलय तल्पमित्यर्थः । तल्पिमं कुट्टिमे तल्पे चन्द्रहासेऽप्येति नानार्थ रत्नमाला ।

(४४) तादृशं कृतान्तस्य दैवस्य नैष्ठुर्यं क्रौर्यं मरण रूप मित्यर्थः । कृतान्तो यमसिद्धान्त दैवा कुशल कर्मसु इत्यमरः ।

(४५) विपुलजघने इति । हे विपुलजघने ! इति सम्बुद्धिः । गच्छमाण व्यापारान्यथाकरणे तव जघनखेदः सम्भवेदित्याशयः मन्दं ।

तत्र च ।

तरन्तो गाङ्गेयाः कनककमलोद्भासिनि जले
मरन्दे मन्दारद्रुमसुमनसां मग्नवपुषः ।
सलीलं पौलोमी कुटिलचिकुरान्दोलनपराः
शनैः सेविष्यन्ते सुमुखि ! भवतीं स्वर्गपवनाः ॥ (४६)

सवितर्कम् । हन्त विशिष्टसुखवत्त्वमपि क्वचिदनिष्टाय । तदुपदिशामि । आकाशे । अथ मल्लिके सम्भावितनन्दनवनोपकण्ठसञ्चारां भवतीं किञ्चिद्वदामि ।

कल्पद्रुमावलिविलोकनकौतुकेन
मुग्धे ! तनुभ्रमय मा मधुरं मुखाब्जम् ।
जिघ्रासवः सुरभिनिश्वसितं सहेलं
निर्धूतपुष्पमलयो द्रुतमापतेयुः ॥

---

त्रिदशालये त्रिदशसरितः कूले विनोदसम्पत्तिसूचकमेतत् । कथं मन्दं याहि । अतिमनोहरायां देवसरिति दत्तदृष्टिः स्वजघनभारसौख्यविशेषेण मन्दं व्रजेति भावः । एवं कारणे तव महत् सेवाच सङ्घटत इत्याह । यावत् मयापि अनुधाव्यते तावत् गेधस्ः व्रह्मणः रथाः वाहनभूताः विमलजलहरीषु लोलाः आसक्ताः विहरन्त्यः द्विजजातयः हंसाः हृष्यन्तः । पद्मलिनयोः त्वदङ्घ्रि सरोरुहयोः सकाशात् केलीयानप्रकारं कर्म अधीयताम् । स्ववाहनानां केलीयानप्रकारशिक्षणेन वेधास्तुष्येदिति भावः ।

(४६) तरन्त इति । अत्र तरन्तः मग्नवपुषः आन्दोलनपराः इति विशेषणत्रयेण क्रमात् शैत्यसौरभ्यमान्द्यास्त्रयोगुणाः । प्रतिपादिताः इति बोध्यम् ।

कल । अयमन्यः प्रकार उन्मादस्य ।

मार । प्रिये ! महष्ट परे देशे कथमेकाकिनी प्रति-पालयेयमिति मा मनसि खेदः कार्य्यः ।

वलितवदनं भूयो भूयो महागममोचिते
प्रहितनयनां मार्गे साशादमामिव तस्थुषीम् ।
तत इत उपेत्याराात् प्रोत्यन्नताकुलचेतसः
सुरयुवतयो द्रक्ष्यन्ति त्वां निमेषमुचा दृशा ॥

वक्ष्यन्ति च ।

सखि ! कथय कुतस्त्वं कस्य कान्तासि मा मा
विभिहि ननु वयन्ते केलिसख्यः स्म सर्व्वाः ।
अथ सहभुव एतान् कल्पवृक्षान् दिदृक्षुः
स्वयमिह चरसि श्रीः सोदरी स्तकंयाम्मान् ॥

किम्बहुना एवमादि भूयो भूयः कौतुकेन पृच्छन्तीषु तासु लज्जा गृहीतकण्ठा यावत् किञ्चिदारभसे वक्तुं तावदहं झटित्यागत्य तासां सम्यगुत्तरयामि । परितो विलोक्य । सखेदम् । कथमिदं भूपृष्ठमात्रगोचरं वपुर्विहाय प्रियतमा समीपं गमिष्यामि ।

कल । सावेगम् । हन्त किमिदमारभ्यते । ननु भो हतविधे ! किं मन्यसे । कीदृशमिदमुन्मादं परिणमयसि । साञ्जलिबन्धं । भगवन् कुसुमायुध ! भूयोऽपि प्राक्तनमुन्मादं आवर्त्तयस्व । यत्र वने वने अन्वेषमाणेन प्रियवयस्येन नैतादृश मारब्धम् ।

मार । कर्णं दत्वा । सहर्षं । इयन्तं समयं प्रियतमां

विहाय प्राणिति (४७) मय्यं प्रकुप्यन् इवो मकरकेतन एव मद्गुकूले प्रवर्त्तते । अयं हि ।

आस्फालयति मुहुर्मुहुरारोपित चण्ड मौर्विं कोदण्डम् ।
आकर्ण्यते हि तादृक टङ्कारो मुखरयन् ककुभः ॥ (४८)

काल । हन्त मधुकर झङ्कारं मौर्विं टङ्कारयति ।

माध । । यावदेनं त्वरयामि । सप्रार्थनं ।

तं बाण मुद्धर निषङ्ग मुखादनङ्ग
पश्चाऽपि वीक्ष्य यमवैष्यऽविकुण्ठ धारम् ।
तेनैव सत्वर मसून् जहि मे दयालो
न द्विःशरं धनुषि सन्दधते हि शूराः ॥ (४९)

स्वर्गमभिनीय । हन्त लोकान्तरं यियासता मया नष्टा दृष्टः प्रियमित्रं कलकण्ठः । हा सखे कलकण्ठ ! क मां विहाय गतोऽसि ।

काल । सवाष्पं । सखे !

---

(४७) प्राणिति जीवमानावेत्यर्थः ।

(४८) अयं हीति । अयं हि मदनोऽपि आरोपितचण्ड मौर्विं कोदण्डं आस्फालयति । अत्र युक्तिमाह । हि यस्मात् ककुभः मुखरयन् तादृशः कोदण्डः टङ्कारः आकर्ण्यते इति योजना ।

(४९) तमिति । हे अनङ्ग ! तं बाणं निषङ्ग मुखात् उद्धर पश्चापि बाणमिति शेषः । वीक्ष्य परिशोध्य यं बाणं कर्म्म अविकुण्ठा क्रियानिपुणा धारा निशितप्रान्तः यस्य तं तथाभूतं अवैमि जानामि तेनैव तथोद्धृत बाणेनैव हे दयालो ! मे असून् सत्वरं जहि । तथाहि शूराः द्विःशरं न सन्दधतेहि इत्यन्वयः । सामान्येन विशेष समर्थनरूपोऽर्थान्तरन्यासः उक्तिरर्थान्तरन्यासः स्यात् सामान्य विशेषयोरिति लक्षणात् ।

माहं गतोऽस्मि भवत स्मरणाज पार्श्वात् ।

मार । अनाकर्णितेन । शृणु ममेदं पश्चिमं वचनम्

इति वदन्नेव मूर्च्छां नाटयति ।

काल । सत्वरमुपसृत्य ।

शेषं वचः कथय मा विरमार्द्रमुक्ता ।

निर्वर्ण्य । सावेगम् ।

भक्तं कथं नु खलु मामवधूय दीनं

निःसङ्ग लोकमपरं प्रति यास्यकाण्डे ॥ (५०) ॥

इति धारयन् ।

हा प्रिय वयस्य मारुत ! पश्य मामनाथं हा नृशंस मकरलाञ्छन ! कथं प्रार्थितोऽहमिति प्राणान् हरसि वयस्यस्य । घोर किं त्वमिव त्वत् सायका अप्यदृश्या एव ये अलक्षित पतना एव व्यापादयन्ति शरीरिणः । शीतलोपचारं नाटयन् । निर्वर्ण्य । हा हतोऽस्मि मन्दभाग्यः । अद्यापि निर्विकारं वदनम् । सबाष्पम् ।

एतदेव तदराल कुन्तलं पेशल स्मितमुदार भाषितम् ।
पुण्डरीकदल दीर्घलोचनं पूर्णचन्द्र रमणीय माननम् ॥

परितो विलोक्य । हा भूधर नितम्ब वासिन्यो वनदेवताः ! परित्रायन्तां परित्रायन्ताम् ।

(५१) विरमत्यसावहह विश्वमङ्गलं
कलकण्ठ जीवित निबन्धनं जनः ।

---

(५०) अकाण्डे । अनवसरे इत्यर्थः ।

(५१) कलकण्ठ जीवितस्य निबन्धनं बन्धक इत्यर्थः । जनः वि-

य मलालयन् ललितमुग्धमल्लिका
किलकिञ्चित स्मित विलोकितादयः ॥

सखे! मारुत! दिवं गतेन त्वया न चिरं प्रतिपाल्योऽस्मि।

नाहं विलम्ब कणिकामपि नाथ कुर्य्यां
जानामि ते पृथगवस्थिति कातरत्वम् ।
स्वर्गं गतोऽपि सह मल्लिकया समेतो-
ऽप्युत्कण्ठसे नु कलकण्ठ विनाकृतः किम् ॥ (५२)

अमर लोक ललाम भूतयो र्युवयो रस्ति च मयाप्युप-
योगः ।

ग्रथ्नीया मलकार्पणोचित गुणां कल्पद्रु सूनैः स्रजं
लीला साधन(५३)मास्तृणीय तलिमं बालैस्तु तत्पल्लवैः ।

---

रन्ति । निरञ्जन नाथे वज्र नाथः स्फुट इति भावः । ललित मुग्ध मल्लिका किलकिञ्चित स्मित विलोकितादयः । शेषास्तु हर्षभीत्यादेः सङ्करः किलकिञ्चितं तच्च । स्मितं मन्दहसितञ्च विलोकितञ्च इति द्वन्द्वः । ललितानि चारूणि ( ललितं चारुणि त्रिषु इति नानार्थ रत्नमाला ) मुग्धानि नूतनानि (मुग्धः सौम्ये नवे मूढे इति नानार्थ रत्नमाला)। यानि मल्लिकायाः किलकिञ्चित स्मित विलोकितानि तानि आदीनि येषां ते तथोक्ताः आदिपदेन भ्रूभङ्गादयो गृह्यन्ते । मल्लिकायाः हाव-विशेषाः इत्यर्थः ।

(५२) कलकण्ठेन विनाकृतः विरहितः सन् किंनु वस्तु इत्यर्थः कर्म । उत्कण्ठसे अभिलषसि सर्ववस्तुनिच वितृष्णोऽसीतिभावः ।

( ५३ ) स्नाः इति सन्तापे । आस्तु सन्तापकोपयोरिति नानार्थ रत्नमाला । यालैः तत्पल्लवैः कल्प किसलयैः लीलासाधकं युवयोः क्रीड़ोपयोगि स्तृणीय तलिमञ्च । ग्रथ्नीयामित्यनुषङ्गः ।

प्रत्यग्रोपहृतेन मन्दपवनं मन्दाकिनीजन्मना
स्वर्णाम्भोरुहिणीदलेन मृदुना सञ्चारयेयं सखे ! ॥

सखेदं परिरभ्य ।

विकटमणिकवाटश्रीमदेतन्मदङ्गै-
र्मुहुरपि परिरम्भं साधु संहृत्य नीतम् ।
विरहयति न वक्षो मल्लिकाप्रेमदत्त-
स्तनसुरतरुदाम्नः (५४) सान्द्रमद्यापि गन्धम् ॥

हा जननयनचन्द्र ! हा गौरीप्रसादलब्ध ! हा कुलतन्तो ! हा कलकण्ठजीवित ! हा मल्लिकाविलासप्रबन्धलालित !(५५)

इत्यविशदवर्णं विलपन् मूर्च्छति ।

ततः प्रविशति बाष्पायमाणवदना नवमालिका
रमयन्तिका कालिन्दी च ।

सर्व्वाः । हा वच्छलसहीअणे (५६) मल्लिए देहि णो

---

(५४) विकटेति । विकटं मणिकवाटवत् विशालं रत्नकपाटवत् श्रीमत् शोभाशालि । विकटः पृथुले रम्ये विशाले विकरालयोरिति नानार्थरत्नमाला । साधु यथा तथा मदङ्गैः संहृत्य परस्परं संबध्य मुहुः परिरम्भं नीतं प्रापितं वक्षः मारुतोरः कर्तृ । मल्लिकया प्रेम्णा दत्तं यत्स्तनसुरतरुदाम कुचवर्त्ति कल्पद्रुममाल्यं तस्य सान्द्रं गन्धं अद्यापि न विरहयति न त्यजति इत्यन्वयः ।

( ५५ ) मल्लिकायाः विलासानां लीलादीनां प्रबन्धेन सन्तानेन लालितविनोदित इति सम्बुद्धिः ।

( ५६ ) वत्सलसखीजने । वत्सलः सखीजनो यस्याः तथाभूते इति सम्बुद्धिः ।

वअणं सुन्दरि विहडन्त चम्पअदलसुरहिरमणिज्जा विल-
आणं वि दिस्सवम्महविआरा (५७) तारिसी तुह तणु-
लच्छीकीरिसस्स हिअदुव्वि वा अम्ह भाअणं आसि । हा
महाभाअ माहव ! कहं णु सहेसि तुमं वि मज्जिणाए किणो
णम । जाए किदे कण्ठच्छेद साहसे सण्णाहो किदो ।

नवमा । हा अमोह णवमालिआ स्थविरहे कीस मं
उवेक्खसि । चिट्ठउ दाव णोमालिआ तुह जीविअ णिव-
न्धण च सविह सुक्क करुणाक्कन्दस्स माहअस्स वा दंसणं
देहि । इत्युक्तवान्निता ।

---

(५७) विलआणंवि दिस्स वम्महविआरा । (वनितानामपि दृष्टमन्मथ विकारा ) दृष्टः मन्मथविकारः रिरंसा यया इति विग्रहः । लोकेहि प्रायशः स्त्रीभिः पुरुषाणामेव मन्मथविकारोत्पादनं दृष्टचरम् । नहु स्त्रीणां तथेदमप्रसिद्धं स्त्रीणामपि मन्मथ विकारोत्-पादकत्वमस्याः प्रतिपादित मित्यतोऽवाङ्मनसगोचरोऽस्याः शोभाविशेष इति फलति । (न च) पुरुषेण पुरुषाणामिव स्त्रिया स्त्रीणां मन्मथ विकारोत्पत्तेः । यकारादि धात्वर्थप्रयोजकत्वा भावेन विफलत्वात् अनानुभविकत्वाच्च असमञ्जसोऽयमुपन्यास इति शङ्क्यम् । स्त्रिया स्त्रीणां मन्मथविकारोत्पत्तेः तदुत्पत्त्या कार्य्य विशेषसम्भवस्य च मानिनी जनरहस्यत्वेन नपुंसामननुभव पथ मवगाहते । वस्तुतस्तु अन्यतैव शास्त्रादवगम्यते यदाङ्करायुर्वेदिनः । यदा नार्य्यावुपेयातां वृषस्यन्त्यौ कथञ्चन । मुञ्चतः शुक्र मन्योन्यं अनस्थिस्तत्र जायते इति । अत्र प्रति पादितयोः कारण कार्य्ययोर्हि यस्मिन्नौ परस्परसङ्गमाऽनस्थि प्रसवयो रन्यतरस्य कार्य्यभूतानस्थि प्रसवस्य प्रसिद्धत्वेन कार्य्यविषया कारण वर्णनमपि अन्वयव्यतिरेकाभ्यां सूचकम् । अतापि सन्दिग्धतान्तु स्व बुद्ध्या कलन प्रतिवचनमेव नीयादुरित्यवसरत्यप्युपरि वक्तुकीयनेन ।

२५

दहति तदिह मद्य स्वर्थमाद्यं मनो मे
सकलकलमृगाङ्कच्छायमच्छस्मितार्द्रम्।
स्मरमुकुरकपोलखेतिमोक्लीतराम
व्यतिकर सुभगन्ते कोमलापाङ्गवल्गम्॥

आकाशे। सहि! मामरेहि पोमालिआ तुमं विज्ञाय भूलो य खणं वि वट्टिस्सदि त्ति। अज्ज एव्व खणे पेच्छ तुह पस्स परि वट्टिणिं। कहं ण जलहराण मज्झे परि अण रत्तिआ चिट्टिस्ससि।

कालिन्दी। हा सहि! एक पदं चिअ (५८) सुमरि दव्वा जादासि। हा भअवदि! मसे तुमं वि मल्लिअं एव्व अणगद वट्टिदि त्ति। हा महाभाअ मारुअ! कलकण्ठ मे हा सहाओ तुम्हम्मि कहिं गदोसि।

रमयन्तिका। हा मन्द भाइणि रमअन्तिए! तुह सङ्गमो एव्व सव्वस्स पव्व अणत्थस्स मूलं आसि। सुणीअदि खु जं जस्स पुढम भाविदं तं तस्स कारणं त्ति। (५९)

कालिन्दी। सहिओ महाभाअं वा इह काणणे अन्ने सामो।

सर्वाः। हा महाभाअ! तुमं वा दंसणं देहि।

---

(५८) एक पदं चिअ। एकपदयेव तत्क्षण एव इत्यर्थः। चमत्कारेण इति यावत्। यद्वा: सर्पदि एकपदे इत्यभिधानम्।

(५९) कालिन्द्या महुतिर्व्वा हा मन्दभाइणि इति। अन्वयःस्फुट एव। तथाच यदस्य यदिव प्रथम भावितत्वात् मत्सङ्गम एव सर्वानर्थस्य कारणं आसीदिति भावः।

उपसर्पन्ति । मारुतकलकण्ठौ दृष्ट्वा । ससम्भ्रमाक्रन्दम् । एदे दम्भोलिखुमसमाविद्ध कप्पतरुक्खा सेरदी महाभाआ । उरोजयो राहत्य पतन्ति ।

नवमालिका कालिन्द्यौ । मारुतकलकण्ठौ दृष्ट्वा । सहि सहि रमअन्तिए ! मुच्छिदा एव्व एदे ता जलहर वारिकण तारहरेण हुमिणा लदा पल्लवपिच्छेण वीजेहि ।

रम । सवाष्पं तथा करोति

कल । प्रबुध्य सविषादम् । हा धिक् ! वयस्य मनासाद्य प्रतिनिवृत्तोऽस्मि विलोक्य । सस्मितम् । हन्त एता अभ्यागताः । प्रकाशम् । हा सखि ! नवमालिके ! हा सखि ! कालिन्दि ! पश्यत मारुतस्यावस्थाम् । एष हि ।

अन्वेषमाणो विपिने पृच्छन् खगमृगद्रुमान् ।
अलब्ध्वा मल्लिकां कान्तां श्रान्तः शेते सुहृन्मम ॥

रमयन्तिकां विलोक्य । एषा तु मुग्धा लज्जा शोकपरवशा निःशब्दं रोदिति । सनिर्वेदम् ।

इयं हि दुर्दान्त कृतान्तलीढं
रमोपमाना रमयन्तिका माम् ।
लतेव दावानल दह्यमान
मुपन्नमाश्रित्य विशेषमेति ॥

मारुतं विलोक्य । हन्त निर्व्विकारमेव वयस्यस्य वदनम् । सत्वरमुत्थाय । वयस्य ! अयमहमागच्छामि । परिक्रम्य अधोविलोक्य ।

अयमनयमग्राह्यतलो गिरिनितम्ब प्रपातः ।

अस्मिन् गजवर्म्मधरैर्गण्डोपलमण्डलैरस्य पुटे ॥
सख्युर्मतिमनुगच्छन् निर्झरपातं पतामि भृगुदेशे (६०)

सर्व्वाः । ससम्भ्रममुपसृत्य कलकण्ठं पृष्ठतः कृत्वा । अह्मे पुढमं पडिस्सामो ।

नव । सहि मल्लिए ! महाभाअ माअन्दस्स जणणीतरेवि तुह्माणं परिअरिआ भविस्सामि । इति पतितुमिच्छति ।

कल । सर्व्वतो विलोक्य । ससम्भ्रममाक्रन्दं । नवमालिके !
मा मा पत सर्व्वतः प्रागनुभूतचरः संक्षोभ इव ।
प्रकाशं रुन्धानं घन पिहित घोषं दिनपतेः । इति (६१) पादं व्यत्यस्य प्रतिच्छन्नच्छ्रूमीत्यादि प्रागुक्तमेव पठति ।

ततः प्रविशति नवमालिका करावलम्बिनी धिक्कामणिना भूषिता मल्लिका

मल्लिका । सहि ! मा मा पडेहि । इति नवमालिकां निवारयति ।

---

(६०) निर्झरपातं पतामि । निर्झरो यथा पतेत्तद्वत् पतामीत्यर्थः ।

(६१) इति प्रकाशं रुन्धानं घनपिहित घोषं दिनपते रित्युक्त प्रकारेण पादं निरुन्धद्विष्वक् किरण महिमानं हिमरुच इत्याकारकम् । व्यत्यस्य व्यत्यासं विधाय । तथा च । निरुन्धद्विष्वक् मित्याकारकाष्टमाङ्कोक्त पद्य प्रथम पाद स्थाने प्रकाशं रुन्धानं घनपिहित घोषं दिनपते रित्येतं पादं संयोज्य इत्यर्थः । तथा पाठो यथा ।

प्रकाशं रुन्धानं घनपिहितघोषं दिनपतेः
प्रतिच्छन्नच्छ्रूंषि प्रकटित भयाश्चर्य्यं मभितः ।
तमोवा तेजो वा तदुभय परिम्लानिरथवा-
किमप्येतत्तत्त्वं तिरयति जगद्दीपयति च ॥

इति । व्याख्यातमेतत् पद्यमष्टमाङ्क एव ।

सर्व्वाः । सहर्षं विस्मयं । मल्लिकां प्रत्यङ्गं परिरभ्य । सगद्गदं । सहि ! भवि सच्चं पच्चाभदासि । सहर्षं । दिष्ट्या अनुकम्पिता स्मो दैवेन । तदिदं प्रमुग्धस्य संज्ञालाभः, अन्धकारपतितस्यार्कदर्शनं, अङ्गारकवलितस्यामृतासारः ।

मल्लि । सवाष्पं । सहिओ कहिं अज्जउत्तो ।

इतराः । सहि ! एसो तुह तारिसेण अलद्धवुभमेण अविस्साइ तत्तेण अदंसणेण तक्खण सञ्जाअ मोहुम्माद-परवसो हूदो तदो काणणेसु परिहिण्डिअ एत्थ एव्व लआ-मूले मुच्छिओ ण उण पडिबुज्झइ ।

मल्लिका । सवाष्पं । हा अज्जउत्त ! इति सह सर्व्वैरुपसर्पति । इतरा दर्शयन्ति ।

मल्लि । तथाभूतं मारुतं दृष्ट्वा । हा हदम्हि मन्दभाआ । हा णाह पेच्छ मं पेच्छ आगअं । इति छिन्नपातं पतति ।

इतराः । अप्राप्त भूतलामेव करतलैर्युगपद्धृत्वा । सहि ! मा मा भआहि मूच्छिओ एव्व एसो । ता अमुअसीएण तुह फस्सेण झत्ति पडिवोहेहि ।

मल्लि । सगद्गदम् । सहीओ तुरिअं मूच्छाहरं मणिं मह सिहा वन्धादो उम्मोइअ अज्जउत्तस्स गव्भे णिक्खिवेह ।

इतराः । जनान्तिकम् । मा दाव मणिं णिक्खिवामो पिअसहीए फस्सेण पडिबुज्झउ महाभाओ । प्रकाशं । सहि ! एव्वं विहेण मणि सहस्सेण वि ण सम्मइ एदस्स मुच्छा तुमं दाव रत्तुप्पल कोमलेण करअलेण जइ पराम रिस्सअसि अज्ज मज्झं तक्खणं एव्व पडिबुज्झिस्सदि ।

काल । सखीनां वचनमनुमोदमानः ।

सखि ! धारय पत्युरङ्ग मङ्गैः
कठिनं मास्य मर्णा निधेहि मालैं ।
त्वद्दर्शन शोक मूढ़बुद्धे
ननु मूर्च्छाहर मौषधं त्वमेव ।

सवीडं वपुलकस्तोत् बङ्गेन धारयति ।

इतराः । सखीमारैः पन्नवैर्वीजयन्ति ।

मल्लिका । मारुतं विलोक्य । हृद्धि अज्जवि ण पड़िबुज्झइ अज्जउत्तो । कलकण्ठं प्रति । मचाभाअ ! तुह वअणेण पड़ि बोहेहि वअस्सं । जइ तुए आइदो सिविणए वि तुह्मिंको (६२) होइ एसो

काल: । अयि मारुत !

निशमय गिरमस्या चक्षुषी स्निग्धतारे
तरलय धृत वाष्पां प्रेयसीं पश्य दीनां
ननु कथयसि शश्वद्दर्शने मल्लिकायाः
मम नयन निमेषो नाम कापि व्यथेति ॥

नव । सहि ! सहि ! दिट्ठं खु मुच्छिओ महाभाओ अञ्जे तुह परिरम्भेण पड़ि बुज्झइत्ति ता कखुणं आलिङ्गेहि ।

मल्लिका । सलज्जं स्वगतम् । अज्जउत्त ! कीस उण एदाणं पुरदो लज्जावेसि । सवामि तुह चरणेहिं एक्कन्दे देमि परिरम्भं ता उट्ठेहि ।

---

(६२) तुम्हिं को (तूष्णीकः) तूष्णीं शील इत्यर्थः । तूष्णीं शीलस्तु तूष्णीक इत्यमरः ।

सर्व्वाः । सहि ! सह पिअदमे पआलब्भिसवसि । अज्ज उण एक्कं परिरम्भं देहि ।

मल्लिका । अवशं चक्षुषी कुर्वती स्वगतम् ।

अज्ज उत्त ! पूर्व्वञ्जू आरसिम्रामुहेण पत्थिदो अज्ज हिज्जइ एसो परिरम्भो । इति समस्ज्जं सकम्प पुलकमालिङ्गति ।

मारुतः । प्रबुध्य स्वगतम् ।

सोऽयं सर्व्वाङ्गीणः कर्पूरविलेप शीतलस्पर्शः ।
मन्ये स्वर्गमितोऽहं प्रियतमया चास्मि परिरब्धः ॥

नयने उन्मील्य मल्लिकां विलोकयन् आलिङ्ग्य नीत्वाय सहर्ष-गद्गदम् । अयि प्रेयसि मल्लिके !

दिष्ट्या परलोकगतामपि त्वामासादितवानस्मि ।

किञ्चात्र मेत्य चलितासि विदेशमेका
किन्तेऽभवन् सवयसः सुरराजवध्वः ।
किं नन्दनद्रुमतले रमते मतिर्वा
किं मे विलम्बकलया कुपितासि किञ्चित् ॥

कल । अद्यापि सोन्मादमेवमेव हृदयम् ।

मल्लि । स्वगतम् । हत्थि मं समाठ्ठिअं मवेइ अज्जउत्तो । हर्षशोकविवशा वचस्येव विलीयते ।

मारुतः । सख्यौ विलोक्य सहर्षम् ।

सखि नवमालिके ! सखि कालिन्दि ! किं युवा-मप्यागते स्थः । अथ जन्मनः प्रभृति अविरहितचणे युवां कथं मल्लिकां विहाय स्थास्यथः । पुनः सहर्षम् । हन्त रमयन्तिका सखः कलकण्ठोऽप्यत्रैव । सखि रमयन्तिके ! स्वागतं ते । सानन्दम् ।

अद्यास्मि पूर्णकामो यत् संगच्छे सह बान्धवैः ।
नाकोऽपि नरकस्तस्य यस्य मित्रं न सन्निधौ ॥

कल । सखे ! ननु मणिकूटशिखरमेतत् न पुनर्नाकः ।

मार । सहर्षातिशयं परितो विलोक्य ।

सखे ! सत्यमेव मेव ।

तदिदमचलशृङ्गं पत्तनं नामराणाम्
अयमपि शुभतोयो निर्झरो नाभ्रगङ्गा ।
विपिनतरव एते न द्रुमा नन्दनोत्था
वयमपि मनुजाः स्मो न श्रिता देवभूयम् ॥ (६१)

मल्लिकामालिङ्गन् । प्रिये ! किमेतत् ।

मल्लि । अज्जउत्त ! अहं खु तस्सिं पल्लव तप्पे सत-क्किआ अदमोह्णा ! पुणो परिबुद्धा पेच्छामि भअवदीए उवङ्कवट्टिणं सिद्धा मणिणा भूसिअं विदेसट्ठिअं अत्ताणं। कहिअं भअवदीए णो किल देसो दमिलेसु कञ्चीउरं णाम सिरि कामच्छीए ठाणं ति । सर्वे विस्मयं नाटयन्ति ।

मार । क्वाद्य भगवती ।

मल्लि । तदो कञ्चीउरादो भअवदिं आलम्बिअ झत्ति एत्थ एव्व आअदम्हि णोमालिआ हत्थे समप्पिदाअ ण पेच्छामि पुणो भअवदिं ।

---

(६१) देवभूयं देवत्वं इत्यर्थः । स्याद्ब्रह्मभूयं ब्रह्मत्वं ब्रह्मसायुज्य मित्यपि । देवभूयादिकं तद्वत् इत्यमरः ।

इति श्रीमल्लिकामारुत व्याख्याने परिमलाख्याने नवमोऽङ्कः ।

प्रविश्य मन्दाकिनी । सस्मितं । वत्स ! दिष्ट्या अविपन्नमनोरथोऽसि । सर्वे सहर्षं विस्मयस्तब्धाः पश्यन्ति ।

माध । भगवति अवाङ्मनसगोचरप्रभावे ! श्रोतुमिच्छामि विस्तरतोऽमुं वृत्तान्तं ।

मन्दाकिनी । वत्स ! महती खल्वियं कथा तदनवसरोऽयं । दूयन्ते खलु विश्वावसुप्रभृतयः स्कन्धावारजनाश्च । तत् झटिति गत्वा आश्वासयामः ।

कल । युज्यत एतत् ।

माध । भगवत्यै रोचते । कलकण्ठ ! दर्शय पन्थानम् ।

कल । इत इतः । इति निष्क्रान्ताः सर्वे ।

इति नवमोऽङ्कः समाप्तः ।



## अथ दशमोऽङ्कः ।

नेपथ्ये ।

नेपालीना मराले विरचयति कचे केतकीपत्रकृत्यं
कण्ठे मुक्ताकलापान् द्विगुणयति सिताम् पाण्ड्यसीमन्तिनीनाम्
कर्णे कर्णाटिकानां प्रकटयतितमां दन्तताटङ्कलक्ष्मीं
कार्पूरी पत्रवल्ली भवति तव यशो गण्डयोः केरलीनाम् ॥ (१)

---

(१) नेपालीनामिति । कार्पूरी पत्रवल्ली कर्पूरकल्पित मकरिका इति विधेय विशेषणम् । उल्लेखालङ्कारः । एकेन बहुधोल्लेखादसौ विषयभेदन इति लक्षणात् ।

पुनर्वैपथ्ये ।

मिथ्याव्योमगिरो निगूढ़घटनादुन्मादनाद्दन्तिनो
यस्ते भ्रमरकः क्रिया समभि हारारब्धवैरोऽभवत् । (२)
प्रत्याहृत्य फलत्विराजकपटैराहन्यमानः स्वयं
व्रीडाल् सोऽद्य पलायते स्वविषया व्याहस्यमानो जनैः ॥

वैतालिकः । (३) आकर्ण्य सापहासम् । पलायते इति किमुच्यते ।

स खलु कतिपयपणारोपित जामाढमरुद्दः तमाल-विटपावलम्बी कात्यायनी हेलनाद्विभ्यता स्वपरिजनेनापि द्वयन्त समयं नो मोचितः । अद्य पुनः प्रतिनिवृत्तायाः मन्दाकिन्याः वचसा त्रोटितबन्धनः तत्क्षण एव महाराज-मपृच्छ्यापृच्छ्य अपलायिष्ट मृगधेश्वरम् ।

पुनर्विहस्य । विदित सकलदुर्नय प्रपञ्चो भ्रमरकः चरणताडनं कलपिङ्कस्य साम्प्रतं (४) अमंस्त । विलोक्य सायहम् । कथमसौ करतलान्दोलित कनकवेत्रलतः कञ्चुकी किमपि वन्दिमार्गमादिशति । कर्णं ददाति ।

---

(२) क्रियासमभिहारारब्धवैरः । पौनः पुन्यं अतिशयो वा क्रिया समाभिहारस्तेन आरब्धं वैरं येन स तथाभूतः । अतिमात्र कलहेन इत्यर्थः ।

(३) वैतालिकः । बोधकार इत्यर्थः । वैतालिको बोधकार-इत्यमरः ।

(४)साम्प्रतम् । युक्तमित्यर्थः । अथसाम्प्रतं युक्तार्थे चाधु-नार्थे च नानार्थ रत्नमाला ।

नेपथ्ये । भो भो वन्दिनो मन्दरक्षुभितमहोदधि कलकल-गम्भीरेण कोलाहलेन मा मा वधिरयत प्रपञ्चम् । शुश्रूषते मल्लिकासखो मारुतः कुमारो भगवत्या मन्दाकिन्या मुखात् कामपि विचित्रां कथाम् । तद्विरमतु बन्दिजनगुञ्जितम् ।

वैतालिकः । आश्चर्यं सकौतुकम् ।

कीदृशी सा कथेति कुतूहलेन स्फुटतीव मे हृदयम् । भवतु स्वयमेव सर्वं प्रकटी भविष्यति । ननु उच्यते अन्तःपुर-गतमापणे श्रुयत इति तदर्थेच्छुं गच्छामि ।

इति निष्क्रान्तः । शुद्धविष्कम्भकः ।

ततः प्रविशति पटमण्डपोपविष्टः कलकण्ठ सखो मारुतः
समीपतश्च सह रमयन्तिकया मल्लिका ।
सशिष्या मन्दाकिनी विभवतश्च परिवारः ।

मारुतः । भगवति ! अवहिता स्मः । प्रस्तूयतां कथा ।

मन्दाकिनी । वत्स मारुत ! श्रूयताम् ।

अस्ति सेतुबन्ध सीमन्तित महार्णव वरिवस्यमान रघुनाथ पराक्रमायामाशायाम् । (५)

मन्दानिल प्रसवगेह गुहाविहारि
नागङ्गनामणि विभूषणकान्ति चित्रः ।
कुम्भोद्भव प्रणयिनीकरवर्द्धमान
पाटीरवल्लि वलयो मलयो गिरीन्द्रः ॥

---

(५) सेतुबन्धेन सीमन्तितः सञ्जातसीमन्तः । (तारकादित्वा-त्तस्य संजातमितीतच् । यो महार्णवः तेन वरिवस्य मानः उपास्यमानः रघुनाथपराक्रमो यस्यां सा तथोक्ता तस्यां आशायां दक्षिणदिशीत्यर्थः । वरिवसिते वरिवस्यितमुपासितशुश्रूषितपरिचरितञ्चेत्यभिधानम् ।

काल । स्वगतम् । सावष्टम्भोऽयमारम्भः ।

मारुतः । भगवति ! श्रूयते खलु सौ वरलापम् ।

प्रतीयन्तां विश्वे परमगरिमाणः क्षितिभृतो

महीयान् कोऽप्यन्यः खलु मलयशैलस्य महिमा ।

गुणस्निग्धास्तत्तत् कुलगिरि यशोहारिणि कुचे

विशुद्धां यत्कीर्त्तिं दधति वनिताश्चन्दनमिषात् ॥ (६)

नवमालिका । जनान्तिकम् । सखि ! मल्लिए मलआ-

अलमिसेण विलम्बात्यणो वस्सिदो ।

मल्लिका । स्मयते ।

---

(६) प्रतीयन्तामिति । विश्वे लोके यद्वा विश्वे सर्वे परम गरिमाणः उत्कृष्ट महिमशालिनः क्षितिभृतः अष्टकुलाचला इत्यर्थः । प्रतीयन्तां प्रतीति विषयाः क्रियन्ताम् ! तेष्विति शेषः । तेषु हिमविन्ध्याद्यष्टकुलाचलेषु मलयशैलस्य मलयनामककुलाचलस्य महिमा महीयान् । तथा कोऽपि अनिर्वचनीयः तथा अन्यः अन्यादृशः खलु इतरकुलाचलमहिमतो विजातीयः किल इत्यर्थः । उपपादयति वनिताः तत्तत्कुलगिरीणां हिमविन्ध्यादि कुलाचलानां यशो हारिणि । महत्त्व कठिनत्वादिना कीर्त्त्यपहार कारिणि कुचे अधिकरणे चन्दन मिषात् पाटीरलेपव्याजात् विशुद्धां विमलां यत्कीर्त्तिं यस्य मलयस्य कीर्त्तिं कर्म गुणेषु स्निग्धाः स्नेहयुक्ताः सत्यः दधति बिभ्रति । तस्य मलयशैलस्येति पूर्वार्द्धेऽन्वयः । तथा च वनिताभिः हिमविन्ध्यादिकुला-चलयशोऽपहारिणि स्वकुचे मलयशैलयशः केवलं गुणोत्तमत्व स्लाघा-पूर्वकधारणादर्शनात् मलय महिमा अन्य एवेति भावः । अत्र चन्दन-मिषादित्यनेन चन्दनत्वा पह्नवव्यक्त्या कैतवापह्नुतिरलङ्कारः कैतवा पह्नुतिर्व्यक्तौ व्याजाद्यैर्निह्नुतेः पदैरिति लक्षणात् ।

मन्दाकिनी । तस्मिन् कदापि सहकारनवप्ररोह
मुह्यत् कुहूमुखमुखोद्गतमुग्धनादे ।
जाते वसन्तसमये सचिवः स्मरस्य ।
देवश्चचार किल दक्षिणगन्धवाहः ॥ ३ ॥

मारु । ततस्ततः ।

मन्दाकिनी । अहो स्वच्छन्द हृद्यानि महतां चरितानि यतः ।
सोऽयं चरन् गिरितटीषु यदृच्छया स्वं
रूपं दधौ मरकतद्युति मातरिश्वा ।
यद्वीक्ष्य हर्षजलशीकरिभिर्बभूवे
नेत्रैर्विलासवलितैर्वनदेवतानाम् ॥

मारु । सकौतुकम् । ततस्ततः ।

मन्दा । अथ मणिधरनाम्नो मन्त्रिणो नागभर्त्तु-
र्मदनजयपताका मञ्जुला नाम कन्या ।
वदनकमलगन्धाकृष्टलोलम्बमाला
विपिनभुवि सखीभिस्तत्र चिक्रीड़ बाला ॥

मारु । ततस्ततः ।

मन्दा । ततश्च ।
सा श्रोणिमन्थरगतिस्तननतान्तमध्या
वासन्तिका सुमनसः सदयं हरन्ती ।
तापिञ्छ पिञ्छ (७) रुचिरं सविधे चरन्तम्
देवं ददर्श मरुतं लतिका निकुञ्जे ॥

---

(७) तापिञ्छपिञ्छवत् । तमाल कुसुम मयूरबर्हवत् रुचिरं मनोहरं मेघश्यामशरीरं ।

मारु । ततस्ततः ।

मन्दा । ततश्च ।

सेयं कन्या किमपि विशिखैर्मान्मथैः पीड्यमाना
सोद्वेगाखी दर मुकुलितापाङ्गमालोकयन्ती
प्रापद्गर्भं हृदय समनुध्यात तत्सङ्ग सौख्या
प्रासोष्टाव प्रचकित मतिः पत्त्रजाले कुमारम् ॥

मारु । एक एवहि समयो देवता गर्भाणां धारण प्रसवयोः । ततस्ततः ।

मन्दा । ततश्च । देवो गन्धर्वश्चस्तामदूषित कन्याभावामनुगृह्णन् अन्यासामपि हृदयक्षोभ माशङ्कमान स्तत्रैव तिरोऽभूत् । सापि पुनर्वात्सल्यचरितस्तनापि पितुर्बिभ्यती लतापल्लव तल्पे निधाय तं बालं तत्पालनार्थञ्च वनदेवतां याचमाना सबाष्पं स्वं धाम जगाम ।

मल्लिका । सदयम् । को उण रक्खओ अरण्णं मि माद पिदुपरिच्चेत्त स्स कुमारस्स ।

मन्दा । अथ पर्य्यन्तभाजो भगवतः कुम्भयोने राश्रमात् समिदाहरणागतैर्मुनिदारकैः दृष्टतो नीतः समर्पितश्च महर्षेः करे ।

मारु । सहर्षं । ततस्ततः ।

मन्दा । ततश्च ।

लोपामुद्रास्वतनयमति प्रस्नुतस्तन्यपायी
काले काले कलस जनुषा क्लृप्तसंस्कारवर्गः ।
हस्ताद्धस्तं मुनिजन वधू मण्डलैर्नीयमान-
स्तत्र स्थाने स किल ववृधे चक्षुषां बालचन्द्रः ॥

माह। अहो पुण्यवानयं बालः। यतो भगवतो दुर्लङ्घ्य शासन स्तम्भित विकट विन्ध्याचल विजृम्भणस्य कुम्भयोनेः पाश्र्वोपकण्ठ मगमत्। यन्नाधं। वचसां दूरे खलु स भगवान् मुनि चक्रवर्त्ती।

प्राक् पाणिपल्लव पुटी चुलकी कृतेन
सत्यं समुद्र सलिलेन समं निपीतः।
दृष्टा ततोऽपि विपुलं हृदयं तदीय
मध्यास्त सुस्थिर मनन्य रुचिर्मुकुन्दः॥

मल्लि। सकौतुकं। भअवदि! तस्स वालस्स कोलि आइ सुणिदुं अहिलासो मे।

मन्दा। स खलु वर्द्धमानः।

कमलोदर मुग्ध करपल्लव स्थितो
अलिकान्त चल द्रलिकान्त कुन्तलः।
मृदु जानु सञ्चलन मञ्जुदरक्कणन्
मणि किङ्किणी गणमरिङ्खदङ्गणे॥ (८)

ततश्च क्रमात्।

मुहुरिभ कलभानां कर्ण मामोटयन्तं
मृगपति पृथुकानां पाटयन्तं सटान्तम्।
अविनय वत मा मा वत्स हिंसां कुरुष्वे-
रिति मुनिजन एनं स्नेह गर्भं व्यरीतृषीत्॥ (९)

---

(८) अलिकान्ते फालप्रदेशे चञ्चन् अलिरिव कान्तः कुन्तलो यस्य स तथाभूतः।

(९) व्यरीतृषीत् वरीरेत्यर्थः।

माल । सोत्कण्ठं । स्वगतं । कथमेतत् कथा श्रवणात् किमप्युन्मनायित मिव बिभर्मि । प्रकाशं । ततस्ततः ।

मन्दा । ततश्च कालेन ।

शृङ्गार सागर विजृम्भणचन्द्रिकोत्थ
मुन्मादनौषध मनङ्ग मतङ्गजस्य ।
राग प्रवाल परिपोषवसन्त मासं
लेभे वयः स सुकृतं वनितेक्षणानाम् ॥ (१०)

नवमा । जनान्तिकं । कालिन्दि ! पेक्ख पेक्ख भट्टिदारिआए अस्सुसिं कहासव णम्मि सविवेओ भमरो ।

माल । ततस्ततः ।

मन्दाकिनी । आवर्ज्य । अति दुर्घटस्यापि घटने पाटवी खलु भगवान् परमेष्ठी । सहि कदाचिदकुटजाकुल प्ररूढ़ानां बालचन्दनलतानां पल्लवैः स्वयमेव जनेन कल्पिते धर्म्यांचिते तल्पे शयानः ।

अङ्गैः कोमलजातरूप कदली गर्भप्रियं भावुके
रङ्गानैरपि विभ्रमैरनुपराम्बिम्बक स्त्रजन्तीं स्मरान् ।
लज्जालोल कनीनिका लुलितया सम्भावयन्तीं दृशा
स्वप्ने कामपि कामनीयक निधिं कन्यां समालोकत ॥(११)

---

(१०) शृङ्गारेति । शृङ्गार एव सागरः तस्य विजृम्भणे चन्द्रिकेव उत्थं उद्भूतमित्यर्थः । सुकृतमिति पाठे । सुकृतं प्रियं इत्यर्थः । अत्र सुकृतं प्रिये इत्यमर वचनात् । सुकृतमितीदं चिन्त्यम् । सुकृतमिति पाठे । वनितेक्षणानां सुकृतं पूर्वकृतपुण्यं जनयत् कर्म परिपाक भूतमित्यर्थः ।

(११) कमनीयकनिधिम् । सौन्दर्यैकस्थान मित्यर्थः ।

माध। सोत्कण्ठं। ततस्ततः।

मन्दाकिनी। ततश्च।

तां मन्द मन्द हसितेन मुखाम्बुजेन
बालां समीपमभियातवतीं सखीत्वम्।
चेलाञ्चले करतलेन समावलम्ब्य
यावत् स तावदवधूय गतेव निद्रा॥

मल्लिका। स्वाकृतार्थं। स्वगतम्। कामिअणप्पहेसिणी खु णिद्दा सिविणअलह्हे वल्लह जणसमागमे असहणा विअ तक्खणोच्चिअ गच्छइ। प्रकाशम्। भअवदि! पडिबुद्धेण किं पडिवन्नम्।

मन्दा। अथ विगलितधैर्य्या हा प्रिये! दर्शनं मे
पुनरपि वितरेति प्रस्तुतार्त्तं प्रलापः।
अहमहमिकयाङ्गे (१२) पातुकामा मजस्रम्
मनसिज विशिखानामेकमासीच्छरव्यम् (१३)

सर्व्वे। खेदं नाटयन्ति।

माध। ततस्ततः।

मन्दा। ततश्च। सह पांसुक्रीड़नादारभ्य हृदयनिर्विशेषाभ्यां जनयित्वा पवनेन समर्पिताभ्याम् आत्मानुरूपरूपशील विद्याशौर्य्यधैर्य्याभ्यां सवयोभ्यां मुपह्वरे (१४) ष्टष्टो न्यवेदयत्तस्या लक्षणानि।

---

(१२) अहमहमिकया अहं पूर्व्वमित्यर्थः। परस्परमहङ्कारेणेत्यर्थः। अहमहमिका तु या स्यात् परस्परं यो भवत्यहङ्कार इत्यमरः।

(१३) शरव्यं लक्ष्यमित्यर्थः।

(१४) उपह्वरे रहसीत्यर्थः।

माव । कथमिव ।

मन्दा ।

नवकुङ्कुमपङ्कवर्णमङ्गं नयने नीलसरोजपत्रदीर्घे ।
वदनं पुनरिन्दुरेव तस्मात्स्खलिता रोमलता कलङ्करेखा ॥ (१५)

अपि च ।

चूडापदे स्फुरति कोऽपि मणिर्यदंशुः
सौदामिनी भवति कैशिक नीरदस्य ।
हारावली च कुचयोरिभकुम्भभासो
र्लावण्यसिन्धुचलफेनततिद्युतिर्या ॥ (१६)

कलकण्ठः । जनान्तिकम् ।

स्वप्रकान्तां कामयमानस्य तस्य सख्योरावेगमालोच्य सम्प्रति ममापि विषीदति हृदयम् ।

मन्दा । नो वाप्यः कलहंस पक्षलुलिता न स्मेरसूना लता
नो गुञ्जद्भ्रमराः सरोजपवना नोद्दामचन्द्रा निशाः ।
नो तल्पानि मृणालभङ्ग कलितान्यासन्नकन्दर्प-
क्रूरातङ्कधरस्य तस्य रतये तां सुभ्रुवं ध्यायतः ॥

मल्लि । सविषादम् । अस्माकं अविसंवादस्वभावं सिविचायकसर्ग्गं चलिल संतद्य किं णु सरणम् ।

---

(१५) वदनं मुखं पुनः इन्दुरेव तस्मात् मुखात् स्खलिता कलङ्करेखा रोमलता इत्यन्वयः ।

(१६) इभकुम्भभासोः कुचयोश्च हारावली स्फुरतीत्यन्वयः । या हारावली लावण्यमेव सिन्धुः तस्मिन् चलायाः फेनपतेः द्युतिरिव द्युतिः यस्याः सा तथा भूता । द्युतिरिव द्युतिर्यस्या इति पदार्थेऽलङ्कारनिदर्शना ।

मन्दा। यथायमपरपक्ष चन्द्र इव दिने दिने परिक्षीयमाणशरीरः कदाचिद्ग्रामभावावशिष्टे दिवसे गिरिनदीतटीभाजश्चन्दनतरोः प्रच्छाय शीतले तले किसलयतल्पिमोपविष्टः कोमलकदलीव्यजनपाणिभ्यां चिन्ताशोकसमाकुलाभ्यां सवयोभ्यामुपास्यमानः करतलनिहितपरिपाण्डु दीनवदनो निःश्वसन् वाष्पमन्थरया दृशा गगनदर्शं * यदृच्छयाऽऽलोकत। तत्र च। मुक्तावदात नयनान् पाटलचञ्चून् गृहीतविसवलयान् शशधरवलयगवतो ददर्श गगनाध्वजाङ्घिकान् हंसान्। (१७)

मारु। सकौतुकम्। ततस्ततः।

मन्दा। तत्रैकेन विसकाण्डधिया खगेन
चञ्च्वा विदश्य कथमप्यपनीयमानः।
वेगाच्च्युतोऽस्य तलिमे निपपात कोऽपि
हारः शरद्विशदचन्द्रमरीचिगौरः॥

कल। विहस्य। उपकृतं देवेन हंसस्य यो मृणालधिया केवलं चञ्चूखेदाय तं बभार।

मारु। सस्मितम्। ततस्ततः।

---

* गगनदर्शम्। यद्यद्गगनं पश्यति तत् तत्सर्वं इत्यर्थः। तथाच निखिलं गगनमिति यावत्। कर्मणि दृशिविदोः साकल्ये इति णमुल्। अलोकत अद्राक्षीत्।

(१७) गगनाध्वनि आकाशमार्गे जाङ्घिकान् जङ्घाकारिकान् धावनचतुरानित्यर्थः जङ्घाकरिक जाङ्घिका वित्यमरः।

मन्दा । ततश्च पतन्तमेव तं विस्मयहर्षोत्फुल्लनयनः करतलेन गृहीत्वा सखाया वाचस्थौ ।

पुलकयति वपु मे स्पृष्टमात्रोऽपि हारो
ध्रुवमयमलसाक्ष्यां सम्प्रदृष्टो मया प्राक् ।
हरि मणिरयमग्रे प्रत्यभि ज्ञायते य-
स्तनयुगमसितेन प्रावृणो दंशुकेन ॥ (१८)

कल । सवितर्कम् । एतेन सा क्वचिदस्तीति कल्पनीयं तैः ।

मल्लिका । आत्मन स्तनाग्रे हारं विलोक्य । स्वगतम् । अस्मवि अञ्ज उत्तेण दिसव हारस्स मज्झे हरिमणीमत्थि ।

मन्दा । अथ तां हारलतां अधिकन्धरमारोपय प्रियतमापरिरम्भमिव अनुभवं स्तदन्वेषणाय विधृतोत्साहः सञ्जात प्रत्याशाभ्यां सह सखिभ्याम् व्रीडाङ्गना पृच्छेरव भगवन्तं कुम्भयोनिं अम्बरपथेन कौवेरीं दिशं प्रास्थत ।

मारु । युज्यते यतो हंसानामागमः सैव दिगुपगम्या ।

मन्दा । प्रतिष्ठमानस्य ।

---

(१८) पुलकयति इति । स्पृष्टमात्रोऽपि हारः मे वपुः कर्म्म पुलकयति । अयं पुलकोद्भेदकरो हारः मया प्राक् अलसाक्ष्यां सम्प्रदृष्टः ध्रुवं सत्यम् । अलयुक्तिमाह यः हरिमणिः असितेन नीलेन अंशुकेन अल्पकिरणेन । अल्पे इति कन् । स्तनयुगं कर्म प्रावृणोत् आच्छादयतिस्म । अयं हरिमणिः इन्द्रनीलः । अग्रे पुरस्तात् प्रत्यभि ज्ञायते प्रत्यभिज्ञेव आचरति । प्रमाणार्थकात् प्रत्यभिज्ञा पदात् कर्त्तुः क्यङित्यादिना । क्यङि क्यङ् मानिनोश्चेति पुंवद्भावे अकृत्सार्वेति दीर्घे सिद्धम् ।

सोऽयं रराज रजनीकरसुन्दर श्री-

रालीलक्षार किरणच्छुरिताम्र गर्भः।

आश्चर्य्य निश्चलकनीनिक लोचनाभि-

रालोकितो मुहुरमर्त्य नितम्बिनीभिः॥

माध। ततस्ततः।

मन्दा। ततश्च। मज्जन्मदस्वरवधूस्तनघातक्षुब्ध

कुम्भस्थलस्खलन जर्जरितोर्म्मिमालाम्।

सप्तर्षिमण्डलनिषेवित कूलदेशम्

पश्यन् जगाम स पुरन्दरलोकसिन्धुम्॥

माध। ततस्ततः।

मन्दा। तत्र च। कल्पतरूणां निकटे।

सकलसुमनः सौरभ्याणां प्रपञ्चयितुः सुतम्

मलयमरुतो दृष्ट्वा प्राप्तं मनोभवमोहनम्।

मुदितमतिरम्लानानां मालां बबन्ध मधुच्युतम्

विनयनमिते मुग्धे कण्ठेऽस्य नन्दनदेवता॥ (१८)

माध। ~~स्ववचसि मल्लिका इमां मालां शोभते।~~

मन्दा। ततश्च।

तत्सौरभानुचलितैः पटलैरलीनां

विष्वक् प्रवर्त्तित कलिन्दसुता प्रवाहः।

---

(१८) सकलेति। सकल सुमनः सौरभ्याणां प्रपञ्चयितुः विस्तार-यितुः गन्धवहस्येत्यर्थः।

गन्धर्वगीतरव मूढ़ कुरङ्गयूथं
गौरीगुरुम् (२०) गगनचुम्बितटं प्रपेदे ॥

मार । ततस्ततः ।

मन्दा । ततश्च । तन्नितम्बस्खलिताया गगनसिन्धोरुप-कूलं उन्मदविद्याधरीवदनाम्बुजगण्डूष सीधुसेकविकसर-केसरम् (२१) कोमलकङ्केलि ताड़नसचह किन्नरकामिनी पाटलचरणाम्बुजजल्पाकमणितुलाकोटिमधुरनिक्वाणझन-झनसीकरं गर्वितगन्धर्वललनातुङ्गकुचकलशा लिङ्गन पुलकितकुरवकं उद्भ्रान्तभृङ्गपटलघटितकपटाम्बुद-दर्शनताण्डवितशिखण्डिमण्डल मण्डितकनककदली मण्डल-मण्डपं षड्योजनविस्तृतमाराममवगाह्य ।

---

(२०) गौरीगुरुं हिमाचलं मित्यर्थः ।

(२१) उन्मादविद्याधरी वदनाम्बुज इत्यादि गद्ये । उन्मदो यासां तास्ता विद्याधर्यश्च तासां वदनाम्बुजगण्डूषसीधूनां मुखगण्डूषासवानां सेकेन विकसराः विकाशिनः केसराः पुन्नाग तरवो यस्मिन् तं तथाभूतं कामिनीवदन मदिरासवैः पुन्नागस्य दोहदत्वादिति भावः । कोमलानि मृदुलानि कङ्केलिताड़ने अशोकताड़ने सहचराणि यानि विद्याधर कामिनीनां पाटल चरणाम्बुजानि तेषु जल्पाकानां वाचालानां मणितुलाकोटीनां रत्नमञ्जरीणां निक्वाण झनझनैः सीकरः प्रचुर यस्मिन् । कामिनी पाददाड़नस्य अशोक दोहदत्वादिति भावः । गर्वित गन्धर्वललना तुङ्ग-कुच कलशालिङ्गनेन पुलकिताः कुड्मलिताः कुरवकाः यस्मिन् तं तथा भूतम् । ललनालिङ्गनस्य कुरवक दोहदत्वादिति भावः । अत्र दोहदत्वे प्रमाण वचनानि तु दोहद शास्त्रे द्रष्टव्यानि विस्तर भयान्न लिखामः ।

उन्नततुङ्ग कनकध्वजदण्डशृङ्ग-
चीनांशुकोल्लिखितकेसरि पुङ्गवाङ्कम् ।
कैलासकूटधवलोन्नत मातुलोके
कात्यायनीभवनसौधमुदात्तकीर्त्तिः ॥

माध । समन्तम् । दृष्टपर इवायं प्रदेशः । प्रकाशम् ।
ततस्ततः ।

मन्दा । ततश्च तत्र प्रविश्य प्रणम्य चरणमम्बिकायाः
पुरो मण्डपैकदेशे स्फाटिकीं वितर्दिं मध्यासीनां कामपि ।
बुद्ध्या विघ्नोपसर्गाऽनपहृतनियमस्थैर्य्यया मध्यनाडी
पर्वश्रेणीनिगूढां हृदयसरसिजे व्यक्तमुद्बुध्यमाने ।
स्वात्मानं वीक्षमाणां स्फुटपुलकतनुं शान्तगम्भीरवेषां
श्रद्धाक्षोहिक्षिताक्षोविनयनतशिरा वर्णिनीं सिद्धयोगाम् ॥(२२

---

(२२) बुध्येति । विघ्नोपसर्गैः अनुपहृतं नियमस्थैर्य्यं यस्यास्तया तयाभूतया बुध्या मध्यनाड्याः सुषुम्णायाः पर्वश्रेणीषु प्रासाद सोपान कारेण क्रमादुपर्य्युपरि श्रेणी भूत पर्वरन्ध्रेषु इत्यर्थः । निगूढां निरुद्ध प्राणां सुषुम्णा मार्गे प्राणनिरोध पूर्वक मनस्थिरी भावाल्लिङ्गां मनोन्मनीमपि गता मितिभावः । उक्तञ्च हठप्रदीपे । यावद्बद्धो मरुद्देहे यावच्चित्तं निरञ्जनम् । यावद्दृष्टिर्भ्रुवोर्मध्ये तावत्कालभयं कुतः । विधिवत् प्राणसंयामै र्नाडीचक्रे विशोधिते सुषुम्णावदनं भित्वा सुखाद्विशति मारुते । यो मनः सुस्थिरीभावः सैवावस्था मनोन्मनीति किञ्च । सुषुम्णावाहिनि प्राणे शून्यं विशति मानसे । तदा च सकलः कर्माणि निर्मूलयति कर्मवित् । इति । अत्र शून्यपदं सुषुम्णा मार्ग-वाचकम् । उक्तञ्च । सुषुम्णा शून्यपदवी ब्रह्मरन्ध्रं महापथः । इति । प्रकारश्च । भात्वा सुषुम्णा वक्त्रेदं कृत्वा वायुश्च मध्यगम् । शुत्वा तु तं

र्ध्वस्थाने प्राणं रुद्ध्वा निरोधयेदिति ।' अपिच । द्विसप्तति सहस्राणि
नाड़ी द्वाराणि पञ्जरे । सुषुम्णाशाम्भवी शक्तिः शेषास्त्वेव निरर्थकाः ।
वायुः परिचितो यस्मात् अग्निना सह कुण्डली बोधयित्वा सुषुम्णायां
प्रविशेदनिरोधतः । सुषुम्णा वाहिनि प्राणे सिद्ध्यत्येव मनोन्मनी । अन्यथा
विविधाभ्यासाः प्रयासायैव योगिनाम् । पवनो बध्यते येन मनस्तेनहि
बध्यते । इत्यादिना । मनोयत्र विलीयेत पवनस्तत्र लीयते । दुग्धा
म्बुवत्संमिलितौ सदैव तुल्यक्रियौ मानसमारुतौ च । यावन्मन
स्तत्र मरुत्प्रवृत्तिः यावन्मरुत्तत्रमनः प्रवृत्तिः तत्रैक नाशादपरस्य नाशः
एक प्रवृत्तेरपरप्रवृत्तिः । अध्वस्तयोश्चेन्द्रिय वर्ग वृत्तिः विध्वस्तयोर्मोक्षपदस्य
सिद्धिरिति । अन्यच्च यावन्नैव प्रविशति चरन्मारुतो मध्यमार्गे इत्यादि
च । मध्यनाड़ी पदेन सुषुम्णैवोच्यते । तदुक्तम् । गङ्गायमुनयोर्मध्ये ।
बालरण्डां सरस्वतीं बलात्कारेण गृह्णीयात् तद्विष्णोः परमं पदम् ।
इडा भगवती गङ्गा पिङ्गला यमुना नदी । तयोर्मध्यगतान्तु यस्तं
वेद स वेदविदित्यादि अनेन हठ योगानुष्ठिति वर्णिता । अतएव
व्यक्तं उद्बुध्यमाने विकासं प्राप्नुवन्ति । तदुक्तम् । सुप्ता गुरुप्रसादेन
यदा जागर्त्ति कुण्डली तदा सर्वाणि पद्मानि भिद्यन्ते ग्रन्थयोऽपि
च । प्राणस्य शून्यपदवी यदा राज पथायते । तदा चित्तं
निरालम्बं तदा कालस्य वञ्चनमिति । हृदयसरसिजे हृदयान्त-
र्वर्त्तिनि पुण्डरीके अष्टदलात्मके अधिकरणे स्थित मिति शेषः ।
आत्मानं परमात्मानम् । उक्तञ्च पद्मकोश प्रतीकाशं हृदयं चाप्य-
धोमुखम् । अधोनिष्ट्या वितस्त्यान्तु नाभ्या उपरि तिष्ठति । हृदयं
तद्विजानीयात् विश्वस्यायतनं महत् । सन्ततं शिराभिस्तु लम्ब-
त्याकोश सन्निभम् । तस्यान्ते सुषिरं सूक्ष्मं तस्मिन् सर्वं प्रतिष्ठितम् ।
तस्य मध्ये महानग्निर्विश्वार्च्चिर्विश्वतोमुखः । सोऽग्रभुग्विभजन्
तिष्ठन् आहार पञ्जरः कविः । सन्तापयति स्वन्देहं आपादतल मस्त-
कम् । तस्य मध्ये वह्निशिखा अणीयोर्द्ध्वा व्यवस्थितः । नीलतोयद
मध्यस्था विद्युल्लेखेव भास्वरा । तस्याः शिखाया मध्ये परमात्मा व्यव-
स्थितः । इति । सु सुष्ठु वीक्षमाणां साक्षात् कुर्वतीं अनेन राज यो-

माद । ततस्ततः ।

मन्दा । ततश्च । तया सह मङ्गमुत्थाय व्याहृतस्वागतया चिरपरिचितयेव सम्भाव्यमानः क्षणमुपविष्टो नातिदूरभाजि लतामण्डपे दत्तश्रुति(२१) रश्रौषीत् लयच्छिन्नानि द्रुत-मध्यविलम्बितानि ।

रमणन्तिका । जनान्तिकम् । सहि मल्लिए ! किं णु एसा-अणा खु एसा कहा ।

---

गानुष्ठिनिः वर्णिता । अतएव स्फुट पुलक तनुं व्यक्तीभवत्तद्दर्शना नन्दानुभावभूतरोमोद्गमां शान्तगम्भीरवेषां सिद्धयोगां फलितयोगां नतु फलिष्यमाणयोगा मित्यर्थः । वर्णिनीं ब्रह्मचारिणीं अभ्यूढां विस्मिताशः उत्फुल्लनयनः विनयनतशिराः अप्राक्षीत् ।

( २१ ) दत्तश्रुतिः सन् लयच्छिन्नानि लयैः तालान्तरालवर्त्ती यः कालोऽसौ लयनाख्य इत्युक्त लक्षणैः कालविशेषैः छिन्नानि परस्परस्पर्श रहितानि द्रुतमध्यविलम्बितानि क्रमात्तत्तीच वनाख्यान् कालविशेषान् इत्यर्थः । अश्रौषीत् अशृणोत् । तथाच लयध्वनिं शुश्रावेतिभावः ।

* लयः दशतालप्राणान्यतमः तालान्तरालवर्त्ती लयनात्मकः काल-विशेषः । उक्तञ्च प्रस्तारे । कालो जातिः क्रियाऽङ्गानि मार्गग्रह कलालयः । यतिः प्रस्तारकश्चेति तालप्राणा दश स्मृताः । तत्र तालान्तरालवर्त्ती यः कालोऽसौ लयनाख्य इति च । तेन छिन्नानि पृथक् पृथक् त्वेन दर्शितानि द्रुतमध्यविलम्बितानि दक्षिणवार्त्तिक चित्रा-परनामधेयाः क्रमाद्द्विचतुरष्टमात्राकाः तालप्राणान्यतमाः कलाः इत्यर्थः । तत्र ध्रुवाऽपरनाम्नी तुर्याख्या एकमात्रा च कला प्रसिद्धा सा पुनरत्राऽप्रस्तुता । उक्तञ्च । कलाः स्युस्तत्र चत्वारो ध्रुवचित्रश्च वार्त्तिकः । दक्षिणश्चेति तत्र स्युर्ध्रुवके मात्रका कला । शेषेषु द्वे चतुरष्टौ क्रमान्मात्राः कला भवेत् । एषैव कथ्यते लोके विलम्बो मध्यमो द्रुतम् । तुर्यश्चेति तदा कालः संज्ञार्द्धं गायकोत्तमैः इति ।

मल्लि । सहि ! मह उण अस्सिं कहा सवणे किं वि किं वि उस्सुअं विअ हिअअम् ।

मन्दा । अथ तया वर्णिन्या सादरं महाभाग ! दिष्ट्या भूषयस्यमुं प्रदेशम् वयस्ये खलु मलयगिरिकटक प्रत्यागतैः सोत्कण्ठं गान्धर्वैर्गीवतैः । अस्ति चात्र विमलयशोराशिवितानित प्रपञ्चस्य विद्याधरामात्य चक्रवर्त्तिनो विश्वावसो-विलास लावण्यमयी कन्या । किं बहुना । यस्याहं सोपहृतममुं हार मुरसा सम्भावयति महाभागः सेवेयं कन्यका पर्य्यन्तभाजिलता भवने देवीं भवानीं कन्दुक क्रीड़ितेन आराधयति । श्रूयते खलु भूषणध्वनि स्तहच्छामो । वयमपीति व्याहृते हर्षविस्मय स्तिमितमति स्तयैव दर्शितमार्गः सह सखिभ्यां तमेव प्रदेश मगमत् ।

मारु । सहर्षम् । दिष्ट्या गगनलताम् कामयमानस्य सत्यैव सा जाता ततस्ततः ।

मन्दा । ततश्च ।

भृङ्गारचामरकलापदुकूलवीटी
क्रीड़ा शुकव्यजन रत्नकलाचि हस्ताः ।
आत्मावलोकनकुतूहलयार्पिताक्षीः
गच्छन् ददर्श परितः परिवारकान्ताः ॥ (२४)

ततश्च ।

---

(२४) भृङ्गारेति । भृङ्गारः सौवर्ण पात्र विशेषः भृङ्गारः कनकालुकेत्यमरः । वीटी ताम्बूली रत्नकलाचिः रत्नमयः · ताम्बूलस्यार्पणपात्र विशेषः धुत्तूर कुसुमाकृतिः ।

अत्रालोकय लोचनोत्सवमिति ब्रूतेस्म सा वर्णिनी
यावत्तावदसौ विभूषणभ्भणत्कारानुयातेक्षणः ।
तामालोकत लोभनीय सुषमापीयूषधारोत्करै-
र्मूर्तो मन्मनि वामुखीव कनकस्निग्धां तडिद्वल्लरीम् ॥ (२५)

माह । सोत्कण्ठम् । ततस्ततः ।

मन्दा । ततश्च । सा त्रिभुवनविजयसमये विरिञ्चि दत्ता स्वर्गाभ्यास पाटवशंसिनी हस्तोपायन पुत्रिकेव देवस्य मकरकेतनस्य (२६) विविधविरचितचारी विशेषं आरब्ध विभ्रमभ्रमीवेग शिथिलबन्ध धम्मिल्ला पातिमाल्य कुलं

(२५) अत्रेति । विभूषण भणत्कारानुयाते क्षणः सन् यत्नो मन्मनि लोभनीय सुषमापियूष धारोत्करैः उपलक्षितां तां कन्या वामुचि अवदे कनकस्निग्धां तडिद्वल्लरीमिव इत्युपमा आलोकत अपश्यत् ।

(२६) त्रेति । देवस्य मकरकेतस्य त्रिभुवन विजय समये । स्वर्गाभ्यासपाटव शंसिनी सदृष्टि सामर्थ्य प्रकाशिका विरिञ्चेन ब्रह्मणा दत्ता हस्तोपायनपुत्रिकेव अजस्रकरधारणोपयोग्य पायन भूतसाल भञ्जिकेव स्थितेत्युत्प्रेक्षा । सा कन्या कर्त्री विविधाः विरचिताः शारीर विशेषाः कन्दुकक्रीडाव्यवहारादिव्यवहारविशेषाः इत्यर्थः शारिर्नी-शोपकरणे स्त्रियां शकुनिकान्तरे । युद्धार्थगज पर्य्याणे व्यवहारान्तरेऽपि-चेति मेदिनी । स्वैरालापादिति यावत् । यस्मिन् कर्म्मणि तद्यथा स्यात्तथा अखिल सखीभिर्म्मण्डलेन मण्डलाकारेण विहिताः कृताः विविधाः अनेक प्रकाराः वाटाः मार्गाः यस्मिन् कर्म्मणि तद्यथा स्यात्तथा वाटो मार्गे इतिस्थाने इति मेदिनी । जनिता स्वेन स्वस्मिन् उत्पादिता क्रीडा यस्मिन् कर्म्मणि तद् यथा स्यात् तथा किञ्चिद्व्रीडया साक मित्यर्थः । एवमवशिष्टाना मपि क्रिया विशेषण तथैवान्वयः । अक्रीडत् चिक्रीड ।

आलोललोचनोत्पलविषयीकृत पतितोत्पतितकन्दुकताड़-नाकुलकरकमलपल्लवित पुरोभागं श्रवनमनोन्नमनवेपि-तस्तनकुम्भत्रुटितकञ्चुलीकं अनुसरणशङ्कितभङ्गुरमध्यतलं अङ्कुरितघर्म्मकणसंहति भङ्गीकोमल धवलदुकूलं निविरोध नितम्बवाचालकाञ्चीकलापं अरुणाङ्घ्रिपल्लवनिष्ठूरतयाव-कलाङ्कितमणिकुट्टिमं अखिलसखोमण्डलविहितविविध-चाटं जनितक्रीड़मक्रीड़त् ।

मारु । ततस्ततः ।

मन्दा । ततश्च । स तूर्णमुपसृत्य विस्मृतनिमेषाभ्यां लोचनाभ्यामापिबन्निव तां उपह्वरे सवयोभ्यां पृष्टोऽकथयत् ।

तद्वदनं ते नयने साभ्रू: सा कन्धरा स विम्बोष्ठः ।
तौ वर्त्तोरुह कुम्भौ सा श्रोणी ते पदे च सैवेयम् ॥ (२७)

अथ तदवस्थादर्शन द्विगुणितमन्मथः पुनरप्युपह्वरे तामिदमवादीत् ।

झलं झलितकङ्कणं चलित तुङ्गपीनस्तनं
चलत् कुटिल कुन्तलं चपलनीलनेत्रोत्पलम् ।
असाम्बु लुलिताननं श्रवणपातितोत्तंसकं
निहन्ति मम मानसं नहि नहि ध्रुवं कन्दुकम् ॥

मारु । जनान्तिकम् । सखे कलकण्ठ ! मल्लिकापि द्वीपान्तरजुषा चित्रकारेण हिमगिरि लताग्रहे ( २८ ) कन्दुकक्रीड़ाखिन्ना लिखिता । प्रकाशं ततस्ततः ।

---

(२७) तदिति । वदनं तत् प्राक् स्वप्नदृष्टं एवमेव नयने ते भ्रू: सा इत्यादौ च तच्छब्दस्यार्थः ।

(२८) हिमगिरि लताग्रहे इति । शैलेन्द्रो हिमवानयं इत्यारभ्य

मन्दा । ततश्च सा ।

मूर्त्तं वसन्तमिव साक्षमिवाङ्गयोनिं
तं वीक्ष्य विभ्रमविलासतरङ्गिताक्षी ।
तत्तद्भ्रमीवलनदत्त कटाक्षमाला
क्रीडाविशेषमभिपूर्य्य शनैर्व्यरंसीत् ॥ (२९)

माध । ततस्ततः ।

मन्दा । ततश्च सा ।

कन्दुकगर्भैर्णा वाञ्जलिना प्रणम्य तां वर्णिनीम् ।
क्रीडावेगविलम्बिनः श्रमकणा कीर्णत्कपोलस्थला
मुग्धेनाङ्गुलि पल्लवेन शनकैरुत्सारयन्ती कचान् ।
पश्यन्ती तमरालतारकरुचिस्निग्धैर्दृशोरञ्चलै
र्बाला बालसमीरकम्पितलतालीला मधत्त क्षणे ॥ (३०)

ततश्च सः ।

मुक्ताहारैरिव हरिमणिसूत्रतचित्रान्तरालैः
ज्योत्स्नाजालैरिव निपतितैः साकमङ्कप्रभाभिः ।
गङ्गापूरैरिव च यमुनावेणिसम्भेदहृद्यै
राकीर्णोऽभूदसितधवलैरायताक्ष्याः कटाक्षैः ॥ (३१)

---

ञ्चाला कन्दुक खेलनेन लिखिता मज्जीवितं मल्लिका इति प्रागुक्त प्रकारेणेति भावः ।

(२९)तत्तद्भ्रमी वलन दत्त कटाक्षमाला । तासां तासां भ्रमीणां कन्दुकखेलन भ्रमीणां वलनेषु परिवर्त्तितेषु दत्ता कुमाराय प्रेरिता कटाक्ष माला यया सा तथा भूता सतीत्यर्थः ।

(३०) बालसमीर कम्पित लतायाः लीलेव लीला तां इति पदार्थ वृत्तिनिदर्शना ।

(३१) मुक्ताहारैरिति । हरिमणि रिन्द्रनीलः तेन स्यूतः

तस्मिन् हि समये ।

द्राघीयांसश्वसितमरुतो घर्मलेशा मुखेन्दौ
गात्रे सादो दृशि मुकुलता वेपथुश्चोरुकाण्डे ।
कृत्स्ना स्ता स्ता स्मरविकृतयः केलिखेदेऽपि तुल्याः
सर्वाङ्गीणस्तदपि सदृशो भेदको रोमभेदः ॥ (२२)

नवमा । जनान्तिकम् । सहि मल्लिए ! कीस उम्मणाअंती विअ दीससि ।

मल्लिका । बाष्पायते ।

मन्दा ।

सस्वेदकञ्चालितसुन्दरेषु गात्रेषु तस्याः प्रतिबिम्बमानः ।

---

चित्रान्तरालैः मुक्ताहारैरिव, तथा चञ्चुप्रभाभिः श्यामरूपाभिः साक्षं निपतितैः ज्योत्स्ना जालैरिव, तथा यमुनावेण्याः सम्भेदः सम्पर्कस्तेन रूढैः गङ्गापूरैरिवच स्मितैरितिशेषः । आयताक्ष्याः वलितधवलैः कटाक्षैः राकोर्णोऽभूत् । अत्र वर्णनीयानां वलितधवल कटाक्षाणां विशेषणविशिष्ट मुक्ताहारादि बहूपमानदानात् बहूपमालङ्कारः ।

(२२) द्राघीयांस इति । जरुकाण्डे वेपथुः कम्पश्च आसन् इत्यध्याहारेणान्वयः जरुकाण्डे वेपथुरित्यनेन वक्ष्यमाणस्मरविकृतेः साफल्यं सूच्यते तदुक्तं निमित्त निदाने जरोः स्पन्दादुरतिं विन्द्यात् जर्वोः स्पन्दात् सुवाससः इति । कृत्स्नाः समस्ताः तास्ताः दीर्घश्वास घर्मलेशादयः केलिखेदेऽपि क्रीडाजन्य श्रमेऽपि । तुल्याः समानाः स्मरविकृतयः मन्मथविकाराः तदपि तथापि सदृशः सर्वाङ्गीणः सर्वाण्यङ्गानि व्याप्नुवन् रोमभेदः रोमाञ्चः कर्त्ता भेदकः केलिखेदान्यत्व प्रकाशकः । दीर्घनिश्वसित स्वेदादीनां श्रमस्मर विकारोभयानुभावत्वेऽपि तयोः श्रमस्य पुलकोद्गमो नानुभाव इत्यतः केलिखेदभिन्नत्वेन स्मरविकारत्वं निश्चीयत इति भावः ।

लावण्यदुग्धाब्धितरङ्गमध्ये तरन्निवेन्दुः चण मौक्षतेक्ष ॥ (२३)

मार। ततस्ततः।

मन्दा। अथ तां सा वर्णिनी वद्गे! सोऽयम्।

वासन्तिकस्य मरुतो दयितः कुमारः
कुम्भोद्भवेन मुनिना स्वयमेधिताङ्गः।
त्वामालिलोकयिषु रागमहस्य हि त्वं
आकर्ण्य किन्नरनुतं गुणमुत्सुकाक्षी: ॥

अथ स्वागतेन सम्भावयेत्य कथयत्।

मारुत कलकण्ठी। वसावम्। भगवति! सापि भगवती युष्मत्तो गुणैरन्यूनेति मन्यामहे। कथ्यतां अपि स्वागतमप्राचीत् सा कन्या।

मन्दा। न तावदसौ वाचनिकी (२४)

अपि तु। प्रागेव सा श्रवणजातदृढानुरागा
तं प्राप्तवन्तमभिगम्य विमोहनाङ्गम्।
भूयोऽपि मन्मथविलाससुजः कटाक्षान्
माहोत्पलैः स्रजइवामुचदस्य गात्रे ॥

मल्लि। जुज्जइ एदं। कहं ण णिसग्ग सालीण सहावो (२५)

---

(२३) लावण्य दुग्धाब्धितरङ्गमध्ये तरन् इन्दुरिवेत्युत्प्रेक्षा। चणं चणकालं प्रतिफलन समये इत्यर्थः।

(२४) न तावदसौ वाचनिकी। असौ स्वागत वार्त्ता वाचनिकी वचनसम्बन्धिनी न तावद्व वाचा स्वागत मपृच्छ दितिभावः।

(२५) निसर्गेण स्वभावेन शालीनः अधृष्टः स्वभावोयस्य स तथोक्तः स्यादधृष्टे तु शालीन इत्यमरः।

कुलकलश्माजणो सागमं वा हरदु। कहेहि देव महाभाएण तदो किं पड़िवसम्।

मन्दा। अथ सः।

क्षोभयन् भ्रमरमण्डलमारात्
सौरभेण मधुरस्य मुखेन्दोः।
व्याहरद्दशनदीधितिपुञ्जैः
आकिरन्निव घनं घनसारम्॥ (२६)

मारु। सकौतुकम्। कथमिव।

मन्दा। भगवति! किं स्वागतसम्भावनेन पश्य।
सौहार्दश्रालिहृदयं सन्तोषस्मेर मेदुरा दृष्टिः।
सम्भावना सतामिव्यमन्यस्वाचारडम्बरः कथितः॥ इति

मारु। साधु विदग्ध मधुरं वचनम्। ततस्ततः।

मन्दा॥ ततश्च। तयोरन्यतरेण मद्ध्या हारोऽयं अत्र भवत्याः हंसमुखात् पतितो गृहीतोऽस्माभिः जरो क्रियतां भूयोऽपीति व्याहृते सखो पुनस्तस्याः महाभाग तारावलीव गगने हारावलीयं विराजतु महाभागस्यैव दोरन्तरे। दीयतां पुनरियं दिव्यपरिमला माला (२७) कुतूहलिनी खलु नो भर्तृदारिकेति सस्मितमकथयत्।

---

(२६) घनसारं कर्पूरं घनसारचन्द्रसंज्ञ इत्यभिधानम्।

(२७) दीयतामिति। दिव्य परिमला इयं माला पुनः मारुत कण्ठगता माला तावदित्यर्थः। दीयतामित्यन्वयः। अत्र हेतुमाह। कुतूहलिनीति। कुतूहलिनी खलु मारुतकण्ठगतमालापेक्षिणी भिव इत्यर्थः।

माध। ततस्ततः।

मन्दा। ततश्च सा सखी।

तेन प्रहृष्टमनसा स्वकरेण दत्ता
मादाय भृङ्गकलगीतगुणां स्रजं ताम्।
अग्राम्य काकुवचनत्रपमाण हृष्टे
रस्याः सखी त्वमवसज्जयतिस्म कण्ठे ॥ (१८)

कल। किं तत्रापि हारमाल्ययोर्व्यत्ययः।

मन्दा।

अत्रान्तरे झटिति कञ्चुकिभिः समेत्य
विद्याधरेन्द्र सचिवस्य पितुर्निदेशात्।
दूता गृहानगमदङ्गजपीड़िताङ्गी
बालामुहुर्वलितकन्धरमीक्षमाणा ॥

माध। ततस्ततः।

मन्दाकिनी। गृहं गता च।

तमहीनभुजङ्गभोगबाहुं सुकुमारे वत मानसे वहन्ती।
विवशा शयनीविसीददङ्गं शयनीत्सङ्गमसेवत श्वसन्ती ॥१९

अचिन्तयच्च।

अस्य खलु कस्याश्चिदतिशयालुपुण्यायामासक्तं हृदयम्।

---

(१८) न विद्यते ग्राम्यं अश्लीलं यासां तास्तथाभूताः काकवः ध्वनि-विकाराः येषां तानि अग्राम्य काकूनि तानि च तानि वचनानि च तैस्त्रपमाणा हर्षिर्यस्यास्तस्यास्तथाभूताया इत्यर्थः।

(१९) अहीनौ अक्षमौ यौ भुजङ्गौ तयोर्भोगवत् बाहू यस्य स तयोक्तस्तम्।

तथाहि । वर्णान्तरेण बिसकाण्डमहोदरेण
स्पृष्टं शरीरमकठोरकरीरमुग्धम् ।
प्रम्लायतीव किमपि श्वसितानिलेन
बिम्बाधरोऽपि कुरुविन्ददलाभिरामः ॥

नवमालिका कालिन्द्यौ । जनान्तिकम् । सहि ! तुएवि उत्तरिज्जञ्चले महाभाअ पडिच्छन्दं दठ्ठूण एसो एव्व सुलोओ कहिओ ।

मन्दा । इति चिन्तयन्तीमेव तां विलम्बयाऽऽगता ताम्बूलकरङ्कवाहिनी तत् स्वयोभ्यामुपवर्णितं स्वप्न वृत्तान्तमखिलमकथयत् ।

मारु । ततस्ततः ।

मन्दा ।

बुध्वा तस्य चिरोपगूढनिविडं प्रेमाणमात्माश्रयं
सा प्रत्यागत जीविता द्विगुणितानङ्गापि निह्नुवती ।(४०)
तद्रूपं (४१) विरहावपाण्डुमधुरं न्यस्तोत्तरीयाञ्चले
दोर्मूलेऽलिखताऽस्य चन्द्रधवलां तामेव हारावलिम् ॥

मल्लि । स्तनांशुकं दृष्ट्वा । स्वगतम् । एत्थ वि हार सहिदो अज्जउत्तस्स पडिच्छन्दो ।

मन्दा । सोऽपि पुनः ।

---

(४०) द्विगुणितानङ्गापि द्विगुणीभूतस्मर विकारापि निह्नुवती यथाभूतत्वमाच्छादयन्ती सतीत्यर्थः ।

(४१) तद्रूपं तस्य कुमारस्य रूपं आकृतिमित्यर्थः ।

तस्याः स्मरन्नुदमनायत सह्य यान्त्या
सम्भ्रान्त भृङ्गगणवारण कैतवेन ।
मध्ये सखि ! त्रिकविवर्त्ति विलोकितैक
वक्षोजमर्द्धनयनाञ्चलवीचितायाः ॥ (४२)

मालु । ततस्ततः ।
मन्दा । ततश्च ।

उत्कण्ठा विनोदनाय चित्रफलके ।
तं शैलं तां सरितं तट वनीसह्य तां चकोराचीम ।
कन्दुकखेलनखिन्नां अलिखत् कण्ठे च तां मालाम ॥

नवमालिका कालिन्द्यौ ॥ अनाख्येयम् । सहि मल्लिए ! तस्सिं वसन्तवणुज्जाणे लआणि अड़ाहिं अह्मेहिं दिट्ठं तुमं वि चित्त फलए एव्वं लिहिद्धासि ( ४३ )

---

(४२) तस्या इति । सह्य यान्त्याः मध्ये सखि सखीनां मध्ये सम्भ्रान्त भृङ्गगणवारण कैतवेन अर्द्धं नयनाञ्चलवीचितं कटाक्षवीचणं यस्यास्तस्यास्तथाभूतायाः । वल्गित कन्धर मीच मानाया इत्यर्थः । तस्याः कन्यकायाः त्रिकविवर्त्ति यथा तथा विलोकितौ । य एक वक्षोजः (वलित कन्धर वीचणकाले वीचण पार्श्वभिन्न वक्षोजस्यैकैक पार्श्वपरावृत्तेः स्वभावात् त्रिकविवर्त्येक वक्षोजस्य वीचिततोक्तिः ) तं स्मरन् सन् उदमनायत उत्सुको बभूव । अभूत तद्भाव विषयात् भृशादिगणीयात् उन्मनः शब्दात् भवत्यर्थे क्यङ् सलोपश्च । ङ्ग । भृशादिभ्यो भुव्यच्वेर्लोपश्च हल इति । ततोऽङित्त्वात् कर्त्तर्यात्मनेपदे लङि उपसर्गसमानाकारं पूर्व्वपदं धातुसंज्ञाप्रयोजके प्रत्यये चिकीर्षिते पृथक्क्रियतयिति ज्ञापितत्वात् उत्पदस्य पृथक्करणेन मनः शब्दात् प्रागट् प्रथमपुरुषैक वचनम् ।

( ४३ ) शैलेन्द्रो हिमावानयं प्रतितटं विद्याधरैराचित इत्युक्तप्रकारेणेति भावः ।

मन्दा । ततश्च । तत्सञ्चारसुभगे (४४) तस्मिन्नेवो-द्याने कथञ्चित् अतिवाहितदिवसशेषो विरहिजनाऽसुक-वलनकालभुजङ्ग्यां प्रवृत्तायां शर्वर्य्यां उदिते च पुरन्दर-हरिदङ्गनाश्रवणमौक्तिकताटङ्के भगवति पियूषभानौ दुःसहविरहानलदह्यमानः सखिभ्यां कल्पिते मृणालतल्पे पतिताङ्गः तामेव विद्याधरकन्यामनुस्मरन् असञ्जातनिद्रः कथमपि क्षपार्द्धमक्षपयत् ॥

मारु । ततस्ततः ।

मन्दा । ततश्च ।

अदूरवर्त्तिनश्चन्द्रकान्तघटितस्य क्रीड़ापर्वतस्य शिखरे दत्तकर्णः ।

निद्राविमूकसत्वे (४५) समये तस्मिन् श्रुतास्तुरश्रौषीत् ।
करुणं कमपि विलापं कर्णायुष्यञ्च धैर्य्यमथनञ्च ॥

मारु । कीदृशः स विलापः ।

मन्दा । हा चूत ! हा चम्पक ! हा लवङ्ग !
हा मल्लि ! हा मालति ! हा कुरङ्गि !
हा हंसि ! हा केकिनि ! हा चकोरि !
आपृच्छ्यतामस्मि गता सखी वः ॥ (४६)

---

(४४) तत्सञ्चारसुभगे तस्याः विश्वावसुनन्दनायाः सञ्चारेण सुभगे मनोहरे ।

(४५) निद्रया विमूकाः वाग्व्यापारशून्याः सत्वाः जन्तवः यस्मिन् इति विग्रहः । सत्वं द्रव्ये पिशाचादौ व्यवसायस्वभावयोः गुणप्राणबलस्वान्तस्त्री स्त्रीव जन्तुषु इति नानार्थरत्नमाला । कर्णायुष्यं स्वविषयत्वेन मधुरत्वेन वा श्रवणेन्द्रिय तर्पकमित्यर्थः । धैर्य्यमथनं अतिकरुणत्वात् धार्य्यलुम्पनञ्चेत्यर्थः ।

(४६) वः सखी युष्मदुपमेय भूततत्तद्वयवशौ ठववाहिलेन

अपिच।

देवि! प्रसूत भुवने! भगवति! भक्तानुकम्पिनि! भवानि!।
अन्यस्मिन् जन्मनि मे भर्त्ता भूयात् स मारुतकुमारः॥ इति

मारु। सदम्भमम्। ततस्ततः।

मन्दा। तत् श्रुत्वा च साशङ्कमुत्थाय सह सखिभ्या-
मारुढ़ क्रीड़ा पर्वतो ददर्श तामेव कन्याम्।

एकाकिनी सुरभि लम्बितदिव्यमालां
वाष्पायमाणवदनां मदनास्त्रभीताम्।
ध्यायन् मृणाललुलिताललसकोमलाङ्गीं
बालां लतावलयवेष्टितकण्ठनालाम्॥

अथ झटिति उपसृत्य।

सुन्दरि! मा मा साहस माचर नन्वेष दासोऽहम्।
अन्यस्मिन् जन्मनि यं प्रार्थयसे भीरु कमितारम्॥

इति वदन्नेव लतावलयं च्छित्वा व्यस्मापयत्।

मारु। सहर्षम्। ततस्ततः।

मन्दा। ततश्च सा।

कन्याविरुद्धमभिसारमवेत्य मुग्धा
गौर्य्याः पुरो बत जिहासुरसुनवासम्।
तं वीक्ष्य वेपथु मती नमिताननेन्दुः
व्रीडात् लिलेख चरणाग्रनखेन भूमिम्॥

मारु। ततस्ततः।

---

सदम्भं अहं इत्यर्थः। कार्त्तव्यतां सातुं योग्यत्वं सता प्राप्ता अपि इष्टलाभहानिं प्राप्तवत्यस्मि इति भावः।

मन्दा । सबाष्पं निश्वस्य । हन्त कोऽपि नाम दैवमतिवर्त्तेत । यतस्तस्मिन् सम्भ्रमे लतापाशच्छेदव्यापृतादस्य करात् च्युतं चित्रफलकं तत इतःस्खलनक्रमेण अधस्तात्तरुमूले काकतालन्यायेन४६* तत्कालागतस्य सुलभमन्युनाम्नो महर्षेः शिरसि न्यपतत् ।

सर्वे । विषादं नाटयन्ति ।

माल । निश्वस्य । नह्यनन्तरायाः उत्सवाः । ततस्ततः ।

मन्दा । ततश्च ।

आबद्धभ्रुकुटीकरालवदनः स मुनिरूचे दुरात्मन् ! कन्याकामुक ! यतो रागजसत्त्व(४७)मनागसो मम शिरस्युपीपतत् दारुफलकम् । अतः पत मानुषीं योनिं इयमपि कुलटा प्राप्य मानुषीभावं उपेत्य जन्मान्तरेऽपि प्रथम एव त्वत्सङ्गमे मूर्च्छत्विति अशनिमिव जलदः शापमसृजत् ।

मल्लि । वेपते ।

सर्वे । बाष्पं नाटयन्ति ।

---

(४६) * चित्रफलकं कर्त्तृ तत इतःस्खलनक्रमेण अधस्तात् तरुमूले तत्कालागतस्य स्खलनकाले सम्प्राप्तस्य सुलभमन्युनाम्नो महर्षेः शिरसि काकतालन्यायेन काकागमनमिव तालपतनमिवेति समासे काकतालं तद्रूपो न्यायः काकतालन्यायस्तेन न्यपतत् पपातेत्यर्थः । यथा काकागमनसमये तालफलपतनं तथा महर्ष्यागमनसमये तच्छिरसि चित्रफलकपतनमित्यर्थः । तथाच काकागमनसदृशं महर्ष्यागमनं तालफलपतनसदृशं तच्छिरसि चित्रफलकपतनमिति भावः ।

(४७) रागजसत्त्वं अनुरागजव्यवसायभूतं दारुफलकं चित्रफलकमित्यर्थः ।

माक। हन्त महान् प्रमादः। ततस्ततः।

मन्दा। सवाष्पगद्गदं। तत स्तच्छाप दहन दग्धाङ्गाभ्यां ताभ्यां तत्क्षण एव विलिल्ये। (४८)

माक। ततः। इत्यर्द्धोक्ते वाष्परुद्ध कण्ठस्तूष्णीं भवति।

मन्दा। अथ तौ सखायौ शाप श्रवण भय निमीलिते लोचने कथञ्चित् उन्मीलय।

नाविन्देतामग्रे प्रियमित्रं नापि तां कन्याम्।

अपितु स्रस्तं तस्याचूड़ारत्नं तदुत्तरीयञ्च॥

माक। ततस्ततः।

मन्दा। ततश्च। तयो रन्यतरः सुहृत् विरह जायमानं शोकं धारयितुं अपारयन् भगवति कात्यायनि प्रसीद जनान्तरे प्रियसुहृद एवानुचरो भूयासमिति प्रार्थयमानस्तस्यैव केलिपर्वतस्य भृगौ निपत्य सुहृद्गतामेव गतिं अयासीत्।

माक। सनिर्वेदं। हन्त सर्वनाशोऽयमुपस्थितः।

काल। सश्लाघं। सौहार्द्द सदृश माचेष्टितं तेन।

मन्दा। इतरः पुन: सखुर राप्त्ति दर्शनेनाप्यधिक सञ्जात शोक मन्युस्तं चूड़ामणिं तच्च सुहृत् प्रतिच्छन्द सुभगं दुकूलं तदपि चित्रफलकं सत्वरं गृहीत्वा धिक् त्वां मूर्ख नृशंस मुनिपाप कथं सर्वेषां नः सञ्जात मृत्युरसीति वाष्परुद्धनयनः पुनःपुन रनिन्दत्।

---

(४८) ताभ्यां कुमारकन्यकाभ्यां विलिल्ये लयनमभाजि इत्यर्थः। लीङ् श्लेषण इति दिवादिगणीयात् धातोर्विपूर्व्वात् आत्मनेपदिनो भावे लिट्।

मारु । सनिर्वेदं । येयं ज्वलतोऽग्ने धूं तहृष्टिः ।

ततस्ततः ।

मन्दा । ततश्च । भूयः । प्रकुपितः स मुनिः यतः सुहृत्

स्नेहेन राक्षस इव व्याहरसि तेन राक्षस एव भव । अयमेव

ते मित्रं यत्नु भवत्विति उत्कीर्ण शापः स्वच्छन्द मगच्छत् ।

मारु । दुर्लङ्घ्यं खलु विधातुर्वैशसं । (४९)

मन्दा । ततश्च तस्मिन्नपि सख्यौ दुकूलादि हस्त एव

प्राप्त मुनि शापोचित वपु स्त्वासित सकल भूते जाते यातु-

धाने । कात्यायनी भवनवर्त्तिनो व्यायमनयन दृष्ट सकला

नर्था ।

तत्र हार्देति सञ्ज्ञान्ता वर्त्तिनी सा समागमत् ।

गौर्थ्याञ्च स्निग्ध मधुरा गगने गौ रजृम्भत ।

मारु । सोच्छ्वासं । कौट्टश्नी सा गौः ।

मन्दा ।

पुत्रीयतो रपत्ये स्यातां मङ्गलयो रिमौ भूमौ

तावितरेतर दत्तौ माला हारौ च सहजौ स्तां ॥(५०)॥

अपिच ॥

इतोऽपि सविशेष सौन्दर्य्यशालि विग्रह परिग्रहयो

रनयो र्भविता परस्पर वर्द्धमानराग रमणीयः समागमः ।

सा पुन र्मुनि शाप प्रयुक्ता प्रथमसङ्गमे मूर्च्छा मूर्च्छाहर

स्यास्य चूड़ामणेः स्पर्शमात्रेण शाम्यत्विति ।

---

( ४९ ) विधातुः वैशसं दैववैषम्यमित्यर्थः ।

( ५० ) पुत्रीयतोः पुत्रकामयोरित्यर्थः ।

मारुत: । सहर्षं । हन्त भगवत्यनुग्रहेण स्वतोऽयमजनि विशाप: । अथ तयो: सख्यो का प्रवृत्ति: ।

मन्दा । पुनस्त्र सा गो कदचलत् योऽयं भृगो निपतित: । सोऽपि एष इव सविशेष सुन्दर वपुर्विशिष्ट एव जातो भूयादेवमेवमेवास्य परमं मित्रं । अन्य: पुनर्यातुधानो भूत: मित्रेणैव मत्कुणा मिहतस्तत्चण प्रत्यापन्न स्वरूपो भूयात् भूयोऽपि स्निग्ध: सखेति ।

कल । दिष्ट्या तावप्यनुगृहीतौ ।

मारु । भगवति ! क्व ते महापुरुषा: किं प्रेयस्या समगमत्तरुण: ।

मन्दा । विलोक्य । सहर्षं ।

या सा कन्या स्मरजय रमा ।

नवाभ्यं मल्लिकामालिङ्ग्य । सा पुनर्मल्लिकेयं ।

सर्वे विस्मयं नाटयन्ति ।

मन्दा । योऽस्या: प्रेम्ण: परमसि पदं मारुतस्त्वं स एव ॥

नवमालिका रमयन्तिका कालिन्द्य: । सहर्षं । एत्थ णो संशयो ।

मन्दा । एकं मित्रं कलय कलकण्ठाख्यं ।

मारु । कलकण्ठमालिङ्ग्य । सखे ! दिष्ट्या त्वामस्मिन्नपि जन्मनि पश्यामि ।

मन्दा ।

अन्यत् पुनस्तं माकन्दं यो रजनिचरतां त्याजितोऽभूत्त्वयैव ॥(५१)

---

(५१) अन्यत् पुन: इतरन्मित्रं तु तं गम्भरक वञ्चकं माकन्दं

मल्लिकामारुत कलकण्ठाः मन्दाकिनी च हर्षातिशयेन मूर्च्छन्ति ।

इतराः । सविस्मयं ससम्भ्रमञ्च । हद्धि मुच्छिदा एदे । हन्त सोओ विअ हरिसो वि णिमित्तं एव्व मुच्छाए । ता सीअलेहिं आसासेह्म ।

मल्लिका । सत्वरं प्रबुध्यते ।

नवमा । सहर्षं । कालिन्दि ! सोमन्तमणिप्पहाविण तज्ज ण लं णिआ विअ सही मुच्छाए ।

मल्लि । सोत्कण्ठा स्वरं । हन्त पसुत्तप्पहुदि वुत्ता विअ अज्ज सव्वं जाणामि तं तं वुत्तन्तं । सहर्षं । अम्महे भअवदि वि सा एव्व । मूर्च्छितान् तान् दृष्ट्वा सावेगं । हद्धि हद्धि किं मुच्छिदा एदे ।

कालिन्दी । मन्दाकिनीं धारयति ।

मल्लि । सहि रमअन्तिए ! तुमंअ कलअण्ठं धारेहि ।

नव । सस्मितं । मल्लिए तुमं वि मारुअं ।

मल्लि । सहर्षं सलज्जं । उत्सङ्गेन धारयन्ती मारुतं विलोक्य सवाष्पं स्वगतं । हन्त सिविणआदो आरब्भिअ एत्तिअं समअं महाविदे तह दुव्विसहं मअणसन्दावं अणुभूद वन्दे अज्जउत्तो । सगद्गदं । अज्जउत्त ! उट्ठेहि । तयोऽपि प्रबुध्यन्ते ।

मारु । मल्लिकामालिङ्गन् । सोच्छ्वासं । अयि मल्लिके !

तथागतं परां काष्ठां प्रेम त्वद्गोचरं प्रिये !

---

कर्म्म कथयेत्यनुषङ्गः । यो माकन्दः रजनीचरतां राक्षसत्वं त्वयैव त्याजितः इति योजना ।

साक्षान्मूतमिवा भाति प्राग्जन्म स्मरतोऽद्य मे ॥

मन्दाकिनीं प्रति। भगवति! अवगीत प्रभावे! (५२) भवती मपि जानामि तामप्येता मिव व्यवहरन्तीम्!

अपिच।

अवगच्छामि साक्षात् सम्प्रति युष्माभिर्निवेदितं जनना-न्तरी वृत्तम्।

एतानि पुनर्विशेषतो न मुञ्चन्ति हृदयं॥ (५३)॥

मल्लिकां विलोक्य।

यत् तत् कन्दुक खेलनं भ्रमिचलन्नेत्रांशुनीलाम्बरं
यत्तत्तात नियोगतो मयि मुहुर्दत्तेक्षणं प्रस्थितं।
किञ्चोद्बन्धन साहसे निशि मया छिन्ने लताबन्धने
व्रीड़ा साध्वस हर्ष शंसि वदनं यत्तच्च तन्व्या स्थितं॥(५४)

---

(५२) अवगीत प्रभावे। अवगीतः प्रभावो यस्या इति विग्रहः। पुनः पुनर्दृष्ट प्रभावे इत्यर्थः। मुहुर्दृष्टेऽवगीतं स्यादिति नानार्थरत्नमाला।

(५३) एतानि पुनः अनुपदं वक्ष्यमाणानि तु इत्यर्थः। हृदयं न मुञ्चन्ति।

(५४) अद्यापि हृदयाऽपरित्यागीनि कानि तानीत्यत आह। यत्तदिति भ्रमिषु कन्दुकभ्रमणेषु चलतोः नेत्रयोः अंशुभिः नील नीलवर्णं अम्बरं गगनं यस्मिन् कर्म्मणि तदयथा भवति तथा कन्दुकखेलनमिति यत् तत्। तथा मयि दत्तेक्षणं यथा तथा तात-नियोगतः प्रस्थितं इति यत् तत्। किञ्च निशि रात्रौ उद्बन्धनसाहसे लताबन्धने छिन्ने सति व्रीड़ा साध्वस हर्षशंसि वदनं यस्मिन् कर्म्मणि तद्यथा भवति तथा तन्व्या कलत्री स्थितमिति यत् तच्च। एतानि पुनर्न मुञ्चति हृदयमिति पूर्व्वेण सम्बन्धः। अथवा भ्रमिचलन्नेत्रांशु-नीलाम्बरं इतीदं कन्दुकखेलनमित्यस्य विशेषणं एवमेव शेषमपि।

मन्दा । वत्स मारुत ! एवं खलु देव्याः कात्यायन्याः गीः । एतदवधिरेव शापजन्मा दोषः । यो हि विस्मृत वीज संस्कारं तिरोधात् ।

सारसिका । स्वगतं । पुढ़म एव्व एसो सव्वो वुत्तन्दो कहिओ मह कसे भअवदीए ।

कलकण्ठः । अङ्गुल्या मवलोक्य सविस्मयं । पश्याश्चर्यं ।

किं चन्द्रमा भुव मुपैति विसर्प दंशुः निर्वर्ण्य ।

किं रूढ़पक्ष पटलो रजताद्रि रुच्चैः । पुनर्निर्वर्ण्य ।

ज्ञातं चलध्वज शिखोल्लिखिताम्बुवाहं

श्वेतं विमान मधि सिन्धु सितेव नौका ॥

सर्वे सविस्मयं पश्यन्ति ।

मन्दा । विलोक्य । वत्स कलकण्ठ ! सत्यं विमान मेतत् । पुनर्निर्वर्ण्य । अत्र च अपरिमित परिवारः कोऽपि दिव्यपुरुषः ।

सितातपत्री चलरत्नकुण्डलः

सचापपाणिश्च सुवर्णविग्रहः । स प्रत्यभिज्ञं (५५)

निर्वर्ण्य सानन्दम् । प्रियं नः प्रियं नः ।

सुतां वरं चेच्छितुमुत्सुकः स्वयं

समेति विश्वावसुरेष मे सखा ॥

मल्लि । विलोक्य सहर्षं सवाष्पञ्च । अंमहे तादो आअदो ।

मारु । भगवति ! पश्य माकन्दोऽपि दक्षिणे भागे । सवर्णमनुत्तिष्ठन्ति ॥

(५५) स प्रत्यभिज्ञं साभिज्ञानं सप्रत्ययः ।

ततः प्रविशति अम्बरयानेन विमानस्थः सह माकन्देन यथोद्दिष्टो विश्वावसुः।

अधस्ताद्विलोक्य। अप्येतदेव जामातुर्मे मारुतस्य कुसुमपुरस्कन्धनिविष्टं स्कन्धावारपदम्। (५६)

माकन्दः। हस्तेन दर्शयन्। ननु वदामि सख्युर्मे निवासभवनमप्येतदेवेति निर्वर्ण्य सहर्षम्। एष खलु सह भगवत्या मन्दाकिन्या मल्लिका सखो मारुतः सम्भ्रमविमुक्तासनः सभावयत्यत्र भवतः समागममहोत्सवम्।

विश्वावसुः। तथा ससम्भ्रमं मारुतं विलोक्य सहर्षम्। स्वगतम्। अद्यैव मे प्रसीदति हृदयम्।

तथाहि। जायते सह कन्याभिः शोकशङ्कुः कुटुम्बिनाम्।
भज्यते च स्वयं तासां लब्धे सुसदृशे वरे॥

निर्वर्ण्य सप्रत्यभिज्ञम्।

स एषदोरन्तरे मुक्ताहारः योहि मया वत्साया मल्लिकायाः कण्ठे स्वयमामुक्तः।

स्मृत्वा।

अयं हि। शेषेण पुरुहूताय पुरुहूतेन सादरम्।
विद्याधराधिराजाय तेन मह्यं समर्पितः॥

---

(५६) स्कन्धावारपदम्। स्कन्धावारस्य सेनायाः पदं स्थानमित्यर्थः। शिविरमिति यावत्। केचित्तु कटकस्कन्धाधारशब्दौ नगरार्थकौ तथैव दृष्टचरौ न पुनः सेनार्थकत्वेनेति। तन्न अत्र कुसुमपुरस्कन्धनिविष्टं स्कन्धावारपदं इत्युक्त्या नगरप्रान्तनिविष्टं नगरमित्यर्थे अवाकुत्वापातात् किन्तु सेनार्थकत्व मनुमतं पुरुषोत्तमेन। स्कन्धावारः स्यात् कटकः शिविरं बलसंस्थितिरिति।

माकन्दः । विलोक्य ।

सन्नमति विमानं संस्प्रष्टुं भुवम् । तदवतरतु तत्र भवान् ।

विश्वावसुः । माकन्द हस्तावलम्ब्य विमानावतारणं नाटयति ।

मन्दा । सहर्षमुपसृत्य । सगद्गदम् । स्वागतं विद्याधरामात्यस्य ।

विश्वावसुः । अये भगवति मन्दाकिनि ! नमोऽस्तु निश्रमव्याजोपकारनिरतायै भवत्यै ।

मारु । सविनयं प्रणमति ।

विश्वावसुः । सपुलकाभ्यां दोर्भ्यां प्रणमन्तमेव परीरम्भते

परिजनः । काञ्चनासनमुपक्षेपयति ।

विश्ववसुः । उपविशति । मारुतककण्ठौ माकन्दमालिङ्ग्य ।

सखे ! दिष्ट्या सर्वे वयं सङ्गताः स्मः ।

सर्व्वे यथोचितमुपविशन्ति ।

मल्लि । सवाष्पमुपसृत्य । हा ताद !

विश्वावसुः । वाष्परुद्धनयनः करतलेनालम्ब्य परिरम्भोत्सङ्गेन धारयन् अस्तिमितहृदयः क्षणं तूष्णीं भवति ।

मल्लि । पितुः कण्ठलग्ना भवति ।

विश्वावसुः । मल्लिकां निर्वर्ण्य स्वगतम् । अहो ! भगवत्याः कात्यायन्याः प्रसादेन प्रागवस्थातो न हीयते अङ्गानां संस्थानविशेषः । सवात्सल्यातिशयम् ।

(५७) गात्रं शिरीषदलकोमलतास्पदं तद्
वर्णस्तु हेमकदली नवकन्दलश्रीः ।

---

(५७) गात्रमिति । हेमकदल्याः नवकन्दलस्य नूतनाङ्कुरस्य

संरक्त कोमल कुहूमधुरःस्वरःसः

निर्वर्ण्य । सौगन्ध्यमाङ्गमवधीरित पुण्डरीकम् ॥

स्कौमित्यं नाटयति ।

मल्लिका । सत्रपविलज्जमाना तत्पङ्कादुत्थाय पार्श्वे तिष्ठति ।

माल । सानन्दं सानुरागञ्च ।

हर्षनिश्चलविलोचनोन्मिषत्

पक्ष्मपालिगलदश्रुमन्थरम् ।

मल्लिकां नमयति त्रपावती

फुल्लकोकनदतुल्यमाननम् ॥

मल्लि । विश्वावसुं स्मरन्ती सखेदम् । स्वगतम् । दुवे सुवि-

तादेस् सरिसो एव्व मह हिअ आवत्था ।

विश्वावसुः । विहस्य । भगवति मन्दाकिनि ! अनुग्रहा-

यैव परं तत्र भवतो महर्षेः सुलभमन्योः शापः । येन पावनो-

र्जस्वलचरितौ ब्रह्मदत्त विश्वावसु अपि वयमिव अपत्यवतां

धुरमारोपितौ । ( ५८ )

मन्दाकिनी । सहासम् । अति मनोहरमभिहितम् । चतु-

र्णामपि वां परस्पर तुल्यानां सदृशावेव वत्सौ ।

विहस्य । देवस्य मारुतस्यैव ब्रह्मदत्तस्य नन्दनम् ।

विश्वावसो यथेयं ते तथा विश्वावसोरपि ॥

विश्वाव । मल्लिका मारुतौ दृष्ट्वा । सत्यं मन्यते ।

---

श्रीरिव श्रीः शोभेव शोभा यस्य इति विग्रहः कन्दलन्तु नवाङ्कुरे इति नानार्थरत्नमाला ।

( ५८ ) शेन शापेन अपत्यवतां प्रशस्तापत्यशालिनामित्यर्थः । प्रशंसायां मतुप् ।

रमयन्तिका नवमालिका कालिन्द्य्रः । परस्परं जनान्तिकम् । अम्हे भअवदीए मन्दाइणीए पहावो । पुढमं संवरअस्स वअणम् तह तह कुणन्तीए वि महाणंदअणणं एक्कं णिव्वूढं पअरणम् । अह उण कहा काहणेण अणो पबन्धो दंसिओ ।

विश्वावसुः । परिवृत्य रमयन्तिकादीन्विलोक्य । भगवति ! का पुनरेताः ।

मल्लि । शनैः पितुः स्वाभावलम्बिनी कर्णे । एदाओ सव्वाओ मह पिअसहीओ । पृथक् पृथक् निर्दिश्य । एसा मह सह पंसु कीलणादो आरम्भिअ अप्प णिव्विसेसा पिअसही णोमालिआ णाम ।

विश्वावसुः । स्वयमपि शनैरेव । अपरे पुनः के ।

मल्लि । एदाओ भअवदीए मन्दाइणीए सारसिआ कालिन्दीओ णाम महाभाआओ अन्ते वासिणीओ ।

विश्वावसुः । वत्से ! अन्यामपि कथय ।

मल्लि । एसा अमच्च विहु राअ उत्तिया रमअन्तिआ णाम पिय सहस्स कलअण्ठस्स वल्लहा ।

विश्वावसुः । सबहुमानम् । स्वगतम् । कथितं ज्ञातृमेतन्माकन्देन युज्यत एसा विशुद्धोदाररूपा अस्थाज्ञतपरमाभिजात्या कलकण्ठस्य ।

प्रकाशम् । सस्मितः वत्से ! कस्ते प्रियसखः कलकण्ठः ।

मल्लि । सलज्जमपक्रामति ।

विश्वावसुः । सानन्दम् ।

अस्यां जन्मनिरूढो मनोरथो मेऽद्य सम्पूर्णः।
पश्यामि भर्तृवार्त्ताग्रहणव्रीडा गुरुं यदि माम्॥

मन्दा। विदितलज्जाहेतुः सस्मितम्। किमिति लज्जते वत्सा।

विश्वावसुः। न मया ज्ञायते। केवलं रमयन्तिका प्रियसखस्य वस्तुतेति निवेदयन्ती कस्य प्रियसख इति पृष्टा लज्जते। सर्वे स्मितमुखा भवन्ति।

रमयन्तिका मल्लिकया सह अपसर्पते।

माध। तथाभूतां प्रियां दृष्ट्वा साभिलाषम्। स्वगतम्। हन्त गुरुजनसमक्षमिति न पारयामि। वाञ्छामि परिरब्धुम्।

प्रविश्य पटाक्षेपेण भ्रमरकः। प्रणम्य। भअवदि! अमच्च वीसवसु विहुराअ सहिएण महाराएण पेसिदा एसा पत्तिआ।

मन्दाकिनी। गृहीत्वा वाचयति।

विश्वानन्द मृगाङ्क वत्स! भवता व्यूढा नवमालिका!
यत् तं भ्रमरकं निबध्य विटपे तत् केन न स्मर्य्यते।
श्वोवाह सविष्णुराततनयां मन्दाकिनी वेषवान्
मित्रं ते कलकण्ठ ऊर्जितमतिस्तत्त्वानुमोदामहे। इति॥

सर्वे हर्षं नाटयन्ति।

विश्वा। सश्लाघम्। अहो! महानयं भगवत्याः नय प्रभावः। ज्ञातं मे सर्वमेतन्माकन्दस्य मुखात्।

नवमालिका। सहि रमअन्तिए! पेक्ख महुअरिआ पडिहार भूमिम्मि पाचइ।

मन्दा। वत्स मारुत! किन्ते भूयः प्रियमुपहरामि।

मारुतः।

कल्याणीश्चिरकाङ्क्षितां मम सुलभां दृष्ट्वा सभे वल्लभां
सन्तुष्टैव तथैव बन्धव इमे जन्मद्दशासादिताः ।
प्रेयान् मे कलकण्ठ एष दयितासङ्गेन सम्वर्द्धते
माकन्दं पुनरप्यवैमि सुहृदं किं मेऽस्त्यतोऽपि प्रियम् ॥

तथाप्येतदस्तु भरतवाक्यम् ।

भद्रं भजन्तु विश्वे भक्तिर्विष्णौ नृणां शिवे वास्तु ।
धर्मे रमन्तु भूपाः श्रीमन्तः सन्तु विद्वांसः ॥

इति निष्क्रान्ताः सर्वे ।

इति श्रीमदुद्दण्डिकवीन्द्रकृते मल्लिकामारुते प्रकरणरत्ने
दशमोऽङ्कः समाप्तः ।

उद्दण्डं रङ्गनाथः सुतमलभत यं रङ्गदेवी तथाम्बा
त्रैविद्येशो महर्षिर्निरवधि महिमा यद्धिते जामदग्न्यः ।
तस्य श्रीविक्रमाख्या बहुमतिरचिते मल्लिकामारुतेऽस्मिन्
मूर्द्धन्योऽगात् नवानां(५९)प्रकरणतिलके निष्कलङ्कोऽयमङ्कः ॥ (६०)

(५९) नवानां मूर्द्धन्यः दशम इत्यर्थः ।
(६०) प्रकरणतिलके प्रकरणश्रेष्ठे इत्यर्थः ।

पण्डितकुलतिलकस्य बि, ए, उपाधिधारिणः श्रीजीवानन्दविद्यासागरभट्टाचार्यस्य आज्ञया श्रीमद्रङ्गनाथ कविना विरचिते श्रीमदुद्दण्डिकवीन्द्रकृतमल्लिकामारुतव्याख्याने परिमलाख्याने दशमोऽङ्कः समाप्तः ।

७ काव्यसंग्रह (सम्पूर्ण) ५
८ लिङ्गानुशासन सटीक ।०
९ ऋतुसंहार सटीक =
० विक्रमोर्वशी सटीक १॥०
१ वसन्ततिलकभाण ।=
२ गायत्री व्याख्या ॥०
३ सांख्यदर्शन (भाष्यसहित)
सांख्य प्रवचन भाष्य २
भोज प्रबन्ध ।।।०
बोदय सटीक ॥=
६ ईश केन कठ प्रश्न मुण्डक
माण्डूक्य (सटीक सभाष्य) ५
७ छान्दोग्य (उपनिषद्)
सभाष्य सटीक ५
तैत्तिरीय ऐतरेय श्वेताश्वतर
निषद्) सभाष्य सटीक २
बृहदारण्यक (उपनिषद्)
सटीक भाष्य १०
सुश्रुत वैद्यक ४
१ शार्ङ्गधर (वैद्यक) १
६२ वेतालपञ्चविंशति ।।।०
६३ पातञ्जलदर्शन (सभाष्यसटीक) ४
४ आत्मतत्त्वविवेक (बौद्धाधिकार) २
५ मुक्तिकोपनिषत् =
६ उपमान चिन्तामणि ।०
६७ नागानन्द नाटक १
दर्शनम् (मध्वस्वामि

(कृत भाष्य सहितम्) २
६९ चन्द्रशेखरचम्पूकाव्य
सम्पूर्ण ३
७० सामवेदस्य मन्त्र ब्राह्मणम्
भाष्य सहितम् २
७१ आरण्यसंहिता भाष्यसहिता १
७२ विद्धशालभञ्जिका नाटिका सटीक १
७३ कारण्डव्यूह (बौद्धशास्त्रम्) २
७४ कुवलयानन्द सटीक अलङ्कार २
७५ प्रियदर्शिका नाटिका सटीक
(श्रीहर्षविरचित) ॥०
७६ सारस्वत व्याकरण सटीक पूर्वार्द्ध १।०
७७ वासवदत्ता सटीक २
७८ (कालिदास कृत)
पुष्पवाण विलास काव्य सटीक ॥०
७९ महिम्न शतकम्, पदारविन्द
शतकम्, स्तुति शतकम् मन्दस्मित-
शतकम् कटाक्षशतकम् १
८० मनुसंहिता कुल्लूकभट्ट कृत
टीका सहित ५
८१ नैषधचरितम् (मल्लिनाथ कृत
टीका सहित) १०
८२ चन्द्रालोक प्राचीन अलङ्कार ॥०
८३ वीरमित्रोदय (स्मृतिशास्त्र) १०
८४ भावप्रकाश (वैद्यक) १
८५ प्रबोध चन्द्रोदय
नाटक सटीक २

कलिकाता संस्कृत विद्यामन्दिरे—बि, ए, उपाधिधारिणः
श्रीजीवानन्द-विद्यासागर-भट्टाचार्य्यस्य सकाशात् लभ्यानि ॥

